शास्त्रविशारद-जैनाचार्यश्रीविजयधर्मसूरिविरचिता

# प्रमाणपरिभाषा

न्यायविशारद-न्यायतीर्थश्रीन्यायविजयप्रणीत-

न्यायालङ्कारनामटीकाविभूषिता

बालीग्रामनिवासी-लक्ष्मीचंद-पुनमचंदनामक-

श्रेष्ठिवरसाहाय्येन


वाराणस्यां

श्रेष्ठिभूराभाईनन्दनश्रीहर्षचन्द्रेण भूतपूर्वस्वधर्माभ्युदययन्त्रागारे मुद्रिता

प्रकाशिता च

वीरसंवत् २४४० ।  मूल्य० रू० ॥।)

THE

# PRAMANAPARIBHASHA

OF

SHASTRAVISHARADA JAINACHARYA

**SHREE VIJAYA DHARMA SURI**

*WITH THE COMMENTARY*

# NYAYALANKAR

OF

NYAYAVISHARADA NYAYATIRTHA

**SHREE NYAYAVIJAYA**

WITH

*THE PECUNIARY HELP OF*

SETH LAXMICHAND POONAMCHAND

OF

**BALI.**

---

Subject matter Printed at DHARMABHYUDAYA PRESS, Benares

*AND COVER*

Printed by GAURI SHANKER LALL, at Chandraprabha Press, Benares.

Published by SHAH HARASHCHAND BHURABHAI, Benares.

Veer–Era, 2440.

*Price Rs. 0-12-0.*

# सहायता देने वाले शेठ का परिचय–

'खाटेड' उर्फ 'भडगातिया' गोत्र वाले मुल्क मेवाड़ में बहुत हैं। इस गोत्र वाले कितने ही मारवाड़ वगैरह देशों में आये हैं। इसी गोत्र वाले शेठ लक्ष्मीचंदजी पुनमचंद जी बाली–मारवाड़ में हैं, जिन्हों ने इस पुस्तक के मुद्रण में सहायता दी है आप के पूर्वजों के नाम–




शेठ लक्ष्मीचंदजी पुनमचंदजी ने संवत् १९५२ में केस-रियाजी तीर्थ का बड़ा संघ निकाला और मारवाड़ में, बड़ा दुर्भिक्ष पड़ा तब अनाज १२ पायली का खरीद के १६ पायलीका देना शुरू किया, इसपर महाराजा साहब जोधपुर की तरफ से इनके सत्कारार्थ वस्त्रालङ्कार आये। शेठ मनरूप जी की स्थापी हुई इनकी दुकान 'मोरा' बंदर में हैं।

ले० पुखराज।

बाली--मारवाड़।

---

नोट—'पायली' एक माप होता है जिससे मारवाड़ादि देशो में अनाज मापा जाता है–

अर्हम् ।

# प्रस्तावना ।

एष त्र्यधिकशतसूत्रात्मा परिच्छेदपञ्चकपर्याप्तः प्रमाणपरिभाषानामा नव्यो निबन्धो लघीयानपि समासतः प्रमाणपरिभाषाविधानपटिम्ना गरिमाणं भेजानः किमीयचतुरचेतश्चमत्कर्त्तुमचतुरः स्यात् ।

इमां च प्रमाणपरिभाषां प्रणेतारः सकलशास्त्राप्रतिहतप्रतिभाप्रौढिम्ना, प्रतिवादिप्रतिसिद्धान्तव्यालपलायनकलागुरुत्वेन, वङ्ग-मरु-गूर्जरादिदेशेषूग्रपादविहारेण मनोहारिण्या ध्वनिपद्धत्या दधानत्वेन मनुजमनोगतदुर्वासनादुर्भिक्षोत्क्षेपपरिक्षमपरमार्थसदुपदेशपयोधाराधाराधरायमाणतां शारदपर्वेन्दुदीधितिधवलदुश्चरचरिताचरणचारिम्णा काशीक्षेत्रप्रभृतिप्रतिस्पर्द्धनप्रज्ञालमण्डलस्थलेष्वपि स्वाभिरामशासनप्रतिष्ठापननिष्णातिमप्रभावमालभारिभावेन, भक्तिभारावनम्रकन्धरधराधीशधोरणीशिरोमुकुटमणिकिरणगणघनरसपरिधौतचरणारविन्दरूपेण च सर्वतः प्रसिद्धिं प्रपेदानाः श्रीमत्पादाः शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरयो दिनकरवदुलूकानां केषाञ्चिदेव नाम चेतसि न समचारिषुः ।

एतेषां च जीवनप्रवृत्तिं गूर्जरभाषायां हिन्दीभाषायां बङ्गभाषायां सिंहलभाषायां आङ्गलभाषायां इटालियनभाषायां जर्म-

नभाषायां संस्कृतभाषायां च तत्तत्तदीयदुःशकस्तवगणस्तोमम-करन्दरसास्वादमधुव्रतायमानतया स्वतः समुद्भुतसमुत्साह-सन्दोहतः तत्तद्देशवास्तव्यलब्धाक्षरमहाशयैः सुनिबद्धत्वेन सर्वत्र प्रसिद्धत्वात् नात्राऽमर्थीयसि प्रस्तावे समुत्सहे लेशेनाऽप्युल्लिखितुम् ।

अत्र च सूत्रेषु तद्गुरुचरणोपजीवी एषोऽहं 'न्यायालङ्कार' नाम्नीं टीकामेतां यथाविधं प्राणैषि ।

अत्रत्यं च विषयस्वरूपं पुरतः प्रादुष्कृतविषयानुक्रमतः शक्नुवन्ति परिचेतुं विपश्चित इति कोऽर्थस्तदुपदर्शनेनेह गौरवं प्रापयितुं लेखम् ।

न चाऽत्रार्हन्ति मनागपि संन्देग्धुं विदग्धहृदयाः, यदुत सत्स्वपि प्रमाणमीमांसा–रत्नाकरावतारिका-स्याद्वादमञ्जरीप्रभृति-प्रकटोत्कटविशङ्कटजैनन्यायशास्त्रेषु आकरग्रन्थसमूहव्यतिरिक्तेषु किंफल एष आयासः ? इति ।

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यैः प्रणीतायास्तद्ग्रन्थान्तरसाधारणानिसर्गमधुरसन्दर्भायाः प्रमाणमीमांसाया अल्पभागस्य मुद्रितत्वादिना प्रसिद्धेः पूर्णरूपेण प्राप्यत्वसन्देहात्, सति च पूर्णरूपतया प्राप्यत्वप्रत्ययेऽपि सौलभ्यविरहेण परिशेषभागस्थविषयस्वरूपाऽपरिज्ञातेः ।

पूज्यपादश्रीरत्नप्रभसूरिभी रचितायाः स्याद्वादरत्नाकराव-

तारिकायाः—————

"प्रमाणे च प्रमेये च बालानां बुद्धिसिद्धये ।
किञ्चिद् वचनचातुर्यं चापलायेयमादधे" ॥१॥

इति स्वसंवादसिद्धप्रत्यक्षगोचरश्लेषानुप्रासादिनैकविचित्ररचनासमुपस्कृतस्वल्पेतरविकल्पजल्पकलापसंकलितनिसर्गगभीरतत्तत्तपनबन्धुमतानुपातिप्रभृतिवावदूकवादिवादचर्चागहन-तया मध्यमबुद्धिभिरप्यसुप्रवेशत्वाभिसन्धेः ।

श्रीमन्मल्लिषेणसूरीश्वरविहितायाः स्याद्वादमञ्जर्याः प्रावादुकप्रवादप्रकटनप्रतिविधानप्रगुणां भगवत्स्तुतिमनुपातुकायाः दार्शनिकविषयवादसङ्ग्रहरूपत्वेन प्रमाणपरिभाषापद्धतिराहित्यप्रतीतेश्चाऽस्मीभ्यः प्रकृतार्थाऽसिद्ध्यभिप्रायेण एतद्ग्रन्थनिर्माणायासस्य सूपयोगित्वसिद्धेः ।

सुप्रत्येमि, चोद्घोषयन्ति च नैकेऽभिरूपा सञ्चारयन्तो निपुणनयनपथे उचितविस्तरेण जैनन्यायनिरूपणानिपुणिम्ना चकासतमिमं ग्रन्थं समूलचूलं सुविचारं पठितारः परिष्कृतबुद्धिविभवीभवन्तः कथं न स्युराकरसम्पदासादनसौभाग्यभाजनतया ? ।

वस्तुतः पुनः—

स्वेनैव स्वकृतेर्विकत्थनाविधेः कौतस्कुती सङ्गतिः ?
किं प्रच्छन्नतया भविष्यति लसत् कस्तूरिकासौरभम् ? ।

किं वा स्वोचितगन्धभासनमृते तिष्ठेत् कलङ्कः क्षणं ?
भृङ्गं मालतिपुष्पमाह्वयति किं सैति स्वयं तद्रसात् ? ॥१॥

इति जानानोऽपि—

प्रबन्धं प्रज्ञालः प्रणयति, नयन्ते पुनरमुं
प्रथां सन्तः केऽपि प्रकृतिसरलाः, मञ्जरिमिह ।
मधुर्माकन्दद्रोर्जनयति पुनः पञ्चमचम-
त्कृतेस्तत्सौभाग्यं प्रथयति हि पुंस्कोकिलगणः ॥१॥

इत्येवमवसाने सतामवधानप्रार्थनाकरणमुचितं मन्वानः सन्दर्भे मुद्रणे वाऽऽपतितवतीमशुद्धिं पराकर्तुं चार्थयमानो-

विरमति—

टीकाकृ न्यायविजयः ।



# न्यायालङ्कारस्थविषयानुक्रमः ॥

## प्रथमपरिच्छेदे--



## द्वितीयपरिच्छेदे——

तृतीयपरिच्छेदे—

२५ प्रतिज्ञाया अपि परार्थानुमाने उपयोगित्वाविदनेन शाक्यमतस्य शिथिलीकारः ।

२६ प्रतिज्ञालक्षणनिर्देशः ।

२७…२८ हेतुलक्षणकथनं तद्भेदभणनं च ।

२९ हेतुभेदद्वयेपि एकतरस्यैव प्रयोज्यत्वानुज्ञा ।

३० एतत्सूत्रम्, प्रतिज्ञाद्यवयवपंचकमध्ये प्रतिज्ञाहेत्वोरेव व्युत्पन्नात् प्रत्युपयोगित्वस्य, दृष्टान्तादिप्रयोगस्याऽनौचित्यशंकायाश्च प्रदर्शनगर्भावतरणिकापूर्वमस्ति, अत्र च बालबोधाय दृष्टान्तादेरप्यादरः प्ररूपितः ।

३१…३७ एतेषु द्विविधदृष्टान्तप्रयोगरूपोदाहरणस्य उपनयनिगमनयोश्च स्वरूपनिर्देशः ।

३८ हेत्वाभासप्रारम्भः । पक्षाभासस्तु अस्यैव सूत्रस्यावतरणिकायामुल्लिखितोऽस्ति । प्रत्यक्षस्मरणाद्याभासास्तु तत्तल्लक्षणसूत्रावसाने सन्ति प्रोक्ताः ।

३९…४० असिद्धस्वरूपम्, तद्भेदकथनं च ।

४१ अस्यावतरणिकायामूचाना हेत्वाभासा विशेष्यासिद्धादयः अनेन सूत्रेण असिद्ध एवाऽन्तर्भाव्यन्ते । व्यधिकरणासिद्धाश्रया सिद्धादयश्च हेत्वाभासेभ्यो बहिष्क्रियन्ते ।

४२…४३ विरुद्धलक्षणनिर्देशः, पक्षविपक्षव्यापकादीनां विरुद्धस्यैव प्रपञ्चरूपकथनं च ।

४४…४५ अनयोरपि क्रमण अनैकान्तिकलक्षणनिर्देशः, पक्षसपक्षविपक्षव्यापकादीनामनैकान्तिकेऽन्तःपातनं च ।

४६ अकिञ्चित्कर–कालातीत–प्रकरणसमानामतिरिक्तहेत्वाभासत्वनिराकरणम् ।

अर्हम्

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिविरचिता

# प्रमाणपरिभाषा



न्यायविशारद-न्यायतीर्थमुनिराजश्रीन्यायविजयनिर्मितया
न्यायालङ्कारनाम्न्या टीकया विभूषिता ।

समूलं यो मोहं भवविटपिबीजं विनिरदहन्
धियं लोकालोकाकलनकुशलां प्रादुरकरोत् ।
त्रिलोकीवन्द्यश्चाऽऽदिशदवितथं मोक्षपदवीं
नमस्तस्मै कस्मैचन भगवते तीर्थपतये ॥ १ ॥
उपचिस्कीर्षया किञ्चिद् यथाबुद्धि समीहते ।
प्रमाणपरिभाषायां श्रीन्यायविजयो मुनिः ॥ २ ॥

इह हि परममहिममहार्णवो जगदद्भुतचरितानुपालनसत्यापितपुरातनमहर्षिगणः परमकारुणिको भगवान् श्रीविजयधर्मसूरिर्विस्तृतगम्भीरपुरातनप्रबन्धाऽपरिपूरणीयप्रमाणतत्त्वपरिचिचीषाणां स्थूलधियामनतिप्रयासतस्तत्र व्युत्पत्त्याधानेन तत्तदाकरग्रन्थाधिकारयोग्यतासम्पादनेन चानुजिघृक्षया समुचितसूत्रपद्धतिं प्रमाणपरिभाषानामानं परिच्छेदपञ्चकात्मकं लघीयांसं ग्रन्थं निर्मिमाणस्तावद् ग्रन्थप्रारम्भे प्रेक्षावत्प्रवृत्तिप्रयोजकमभिधेयमाविष्कर्त्तुमादिमं सूत्रमाह—

## अथ प्रमाणपरिभाषा ॥ १ ॥

ननु मङ्गलतिरस्कारेण प्रथमत एवाभिधेयमाविष्कुर्वतः सूरेः शिष्टसमयपरिहाणितः शिष्टतापरिपालनं नैषत्करम्, शिष्टा हि

क्वचिदभीष्टे वस्तुनि प्रवर्तमाना अभीष्टदेवताप्रणिपातपुरस्सरं प्रवर्त्तन्त इति चेत् । कुत एतदज्ञासीः ?। मङ्गलं तिरोऽकार्षीदाचार्य इति ग्रन्थादौ तदनिर्देशादिति चेत् । व्यभिचारादयमहेतुः, न हि मङ्गलव्यापित्वं तन्निर्देशस्य येन तदनुपलम्भात् तदभावावधारणं न्याय्यं स्यात्, तदभावेऽपि मनः-कायाभ्यां मङ्गलस्यावस्थानात्। अथवा 'प्रमाणपरिभाषा' इति प्रमाणपदाभिधानेन परममङ्गलभूतं परब्रह्मस्वरूपं केवलज्ञानात्मकं प्रमाणं परिभावयति भगवति ग्रन्थकृति कुतः शिष्टाचारव्यतिक्रमारेकालवोऽपि ?। अपिच, अथ-शब्दस्य माङ्गलिकत्वेन सूत्रे तस्याऽधिकारार्थस्यापि श्रवणमन्यार्थनीयमानकुसुमदाम-सलिलकलशादेर्दर्शनमिव मङ्गलायाऽपि कल्पत इति पश्यतो नाऽपरितोषकारणं परिपश्याम आयुष्मत इति ; सति च मङ्गले परिपान्थिप्रत्यूहप्रतिघातादक्षेपेण शास्त्रसिद्धिरिति युक्तस्तदादर इति ।

ननु 'अधिकारार्थोऽथशब्दः' इत्युक्तम्, तत्र कोऽधिकारः ?। उच्यते- अधिकारः प्रस्तावः, तथा चैतच्छास्त्रेण प्रस्तूयमानस्य प्रमाणस्योपदेशो भावीति समवगतशास्त्राभिधेयाः प्रेक्षावन्तः प्रवृत्तिमार्गमुपदर्शिता भवन्ति । प्रमाणं चार्थसिद्धिसाधकतमं सम्यग्ज्ञानम्, यन्निबन्धना हि लौकिका अलौकिकाश्च सर्वे व्यवहारा उपपत्तिपदवीमाविशन्ति, अतस्तदवश्यं जिज्ञासितव्यम् । तज्ज्ञानमेव चानेन शास्त्रेण साक्षात्प्रयोजनं श्रोतुः, ग्रन्थकर्त्तुस्तु बालोपकारः, द्वयोरपि परम्परं प्रमाणतस्तत्त्वाधिगमद्वारेण श्रेयःपथसमारोहे क्रमतः परमानन्दसिद्धिरेवेति प्रयोजनसंसूचनादनेन सूत्रेण निष्प्रयोजनत्वशङ्काऽनुत्थानोपहतैव । सम्बन्धोऽप्युपायोपेयलक्षणः सामर्थ्यादवगतो भवति- प्रमाणाधिगमो ह्युपेयम्, तदुपायश्चैतच्छास्त्रम्, अभिधेयं तु साक्षादभिधत्त एतत्सूत्रम्; तथाहि- परिमिता भाषा परिभाषा, भाषा भाषणमुपदेशश्चेत्यनर्थान्तरम्, तथाच सङ्क्षेपत उपदेशः परिभाषापदार्थः, स च प्रमाणस्य, इति

प्रमाणोपदेशमनेन सूत्रेण प्रतिजानीते सूत्रकारः । इत्थं चाभिधेयं साक्षादभ्यधात्, संबन्ध-प्रयोजने तु सूचापथे समतिष्ठिपदिति ।

अत्र च प्रमाणं परिभाषितुं प्रतिजानानस्यापि ग्रन्थकारस्य प्रमाणस्वरूपोपदर्शनानन्तरं नयादिस्वरूपकीर्त्तनलेशः प्रसङ्गजनितो नौचितीमतिक्रामति । अथवा, परितो व्याप्य भाषणं परिभाषा प्रमाणाभिसम्बन्धिनयादिव्यापी प्रमाणस्योपदेश इति सर्वमवदातम् । इह च प्रमाणोपदेश उद्देशादिद्वारमन्तरेणाऽशक्यः कर्त्तुम्, अनुद्दिष्टस्य लक्षणनिर्देशानुपपत्तेः, अनिर्दिष्टलक्षणस्य च परीक्षितुमशक्यत्वात्, अपरीक्षितस्य चोपदेशाऽयोगात्, अश्रद्धामलक्षालनाऽसम्भवाच्च, आह च न्यायभाष्यकारः "त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा च" इति । तत्र नामधेयमात्रकीर्त्तनमुद्देशः, उद्दिष्टस्याऽसाधारणधर्मो लक्षणम् । तद्विपरीतो लक्षणाभासः । स च त्रेधा-अव्याप्तोऽतिव्याप्तोऽसम्भवी च तत्र लक्ष्यैकदेशवृत्तित्वमव्याप्तिस्तद्वानव्याप्तः, यथा गोः शाबलेयत्वम् । लक्ष्यालक्ष्यवृत्तित्वमतिव्याप्तिस्तद्वानतिव्याप्तः, यथा गोर्विषाणित्वम् । बाधितलक्ष्यवृत्तित्वमसम्भवस्तद्वानसंभवी, यथा तुरङ्गस्य विषाणित्वम् । यत्र चैषा दोषत्रयी नास्ति तत्सुलक्षणम् । न चात्र लक्षणलक्षणे उक्तदूषणकणोऽपि शक्यः प्रेक्षितुं सूक्ष्मचक्षुषा । न च गोरलक्षणे शाबलेयत्वादौ गोरसाधारणधर्मत्वेन गोलक्षणत्वानुषङ्गः, येन रूपेण लक्ष्यता तद्रूपसमनियतधर्मस्याऽसाधारणपदार्थत्वाद् गोत्वसामान्येन लक्ष्यीभूतस्य गोपदार्थस्य गोत्वसमनियतत्वाभावेन शाबलेयत्वादावसाधारणधर्मत्वाभावात् शाबलेयेतरत्रापि गोत्वसामान्यसद्भावादिति सर्वलक्षणव्यापि अलक्षणव्यावृत्तमुक्तलक्षणोऽसाधारणधर्म इत्येवं लक्षणलक्षणं सङ्गतिमङ्गीकरोति । विभागस्तु विशेषलक्षणस्यैवाङ्गमिति न पृथगुच्यते । लक्षितस्येदमित्थं भवति नेत्थमिति न्यायतः परीक्षणं परीक्षा । तत्र प्रमाणम-

त्रैव सूत्रे उद्दिष्टम्, इदानीमुद्दिष्टस्य तस्य लक्षणं निर्देष्टव्यम्। तच्च द्विधा भवति- सामान्यतो विशेषतश्च। तत्र सामान्यतः प्रमाणलक्षणनिर्देशोऽनन्तरमेव सूत्रम्। विशेषतस्तु "साक्षात्करणं प्रत्यक्षम्" इत्यादि वक्ष्यति। परीक्षाव्यापारं च षष्ठादिसूत्रमिति ॥१॥

तत्र प्रमाणसामान्यलक्षणमाह—

## यथार्थज्ञानं प्रमाणम् ॥ २ ॥

प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत्प्रमाणम्, तदेव लक्ष्यम्। यथार्थज्ञानत्वं तस्य लक्षणम्, अर्थ्यतेऽधिगम्यत इत्यर्थो विषयस्तमनतिक्रम्येति यथार्थमव्यभिचारि, यथावस्थितरूपेण विषयपरिच्छेदीति यावत्, तथाभूतं ज्ञानं प्रमाणम्, अन्यथा प्रमाणत्वानुपपत्तेः। अतथाभूतानि हि संशयादिज्ञानान्यप्रमाणानि। तथाच यथार्थपदेन संशय-विपर्यया-ऽनध्यवसायानाम्, ज्ञानपदेन च जडात्मनः सन्निकर्षादेः स्वसमयप्रसिद्धस्य सन्मात्रगोचरस्याऽज्ञानरूपस्य दर्शनस्य च प्रमाणत्वव्यवच्छेदः। इत्थं चात्मव्यापाररूपमुपयोगेन्द्रियमेव प्रमाणमिति स्थितम्, तस्यैवाव्यवधानेनाऽर्थपरिच्छेदसाधकतमत्वात्। न ह्यव्यापृत आत्मा स्पर्शादिप्रकाशको भवति, निर्व्यापारेण कारकेण क्रियाजननाऽयोगात्, मसृणतूलिकादिसन्निकर्षेण सुषुप्तस्यापि तत्प्रसङ्गाच्च। अन्ये तु लब्धीन्द्रियमेवार्थग्रहणशक्तिलक्षणं प्रमाणं मन्यन्ते, यदाहुः—

"ततोऽर्थग्रहणाकारा शक्तिर्ज्ञानमिहात्मनः।
करणत्वेन निर्दिष्टा न विरुद्धा कथञ्चन" ॥१॥ इति

तदसत्, उपयोगात्मना करणेन लब्धेः फले व्यवधानात्, व्यवहितस्यापि करणत्वाभ्युपगमेऽतिप्रसङ्गात्, शक्तीनां परोक्षत्वाभ्युपगमेन करण-फलज्ञानयोः परोक्ष-प्रत्यक्षत्वोपगमे प्राभाकरमतप्रवेशाच्च। अथ ज्ञानशक्तिरप्यात्मनि स्वाश्रये परिच्छिन्ने

द्रव्यार्थतः प्रत्यक्षेति चेत् ।, न द्रव्यद्वारा प्रत्यक्षत्वेन सुखादिवत् स्वसंविदितत्वाव्यवस्थानात् ,'ज्ञानेन घटं जानामि' इति करणोल्लेखानुपपत्तेश्च । न हि कलशसमाकलनवेलायां द्रव्यार्थतः प्रत्यक्षाणामपि कुशूल-कपालादीनामुल्लेखः समस्तीत्यलं बहुना ।

धारावाहिकबुद्धिस्तु नाऽप्रमाणं तथाहि— एकस्मिन्नेव घटे 'घटोऽयम्' 'घटोऽयम्' इत्येवमुत्पद्यमानान्युत्तरोत्तरज्ञानानि धारावाहिकज्ञानानि । न, ह्येषां गृहीतग्राहित्वेनाऽप्रामाण्यम्, तस्य प्रामाण्याविरोधात्, अन्यथाऽवग्रहादिषु प्रामाण्यभङ्गप्रसङ्गात् । न ह्येषां भिन्नविषयत्वम्, अवगृहीतस्यैवेहनात्, ईहितस्यैवावायात्, अवेतस्यैवावधारणाच्च; इतरथाऽसामञ्जस्यापत्तेः । न चामीषां पर्यायापेक्षयाऽनधिगतविशेषावगमादपूर्वार्थत्वं वाच्यम्, एवं हि पर्यायापेक्षया धारावाहिकधियामपि गृहीतग्राहित्वं न संभवति, क्षणिकत्वात् पर्यायाणाम् । अथ द्रव्यापेक्षया गृहीतग्राहित्वं प्रामाण्यविरोधीति मतम् । तदप्यसम्यक्, द्रव्यस्य नित्यत्वेन गृहीतग्रहीष्यमाणावस्थयोर्भेदाभावात्, एवं च कं विशेषमाश्रित्य ग्रहीष्यमाणग्राहिणः प्रामाण्यं न पुनर्गृहीतग्राहिणः? इति प्रेक्षणीयम्, प्रमाणत्वेनाङ्गीकृतस्यापि स्मरणस्य गृहीतग्राहित्वमेव स्वतत्त्वम् । तस्याऽप्रामाण्यं वदितारोऽपि

"न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम् ।
अपि त्वनर्थजन्यत्वं तदप्रामाण्यकारणम्" ॥ १ ॥

इत्यादिनाऽर्थाजन्यत्वमेवाऽप्रामाण्यबीजमाहुः । एतेन धारावाहिकज्ञानव्यवच्छेदकाऽपूर्वार्थविशेषणघटितानि "स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम्" इत्यादिप्रमाणलक्षणानि नग्नाटादीनामलक्षणानीति ध्येयम् ।

प्रमाता प्रमित्याश्रयः, प्रमितिश्च परिच्छेदः फलमिति न तयोः करणसाधनज्ञानपदवाच्यत्वाभावेन प्रमाणलक्षणातिप्रसङ्ग इति प्रमाणेतरत्राऽसञ्चारादतिव्याप्तेः, प्रत्यक्षपरोक्षलक्षणद्विवि-

धप्रमाणलक्ष्ये ऽव्याप्यवृत्तित्वेनाऽव्याप्तेः, लक्ष्यवृत्तेरबाधितत्वेनासम्भवस्य चासम्भवादवदातमेतत्प्रमाणलक्षणम् ॥ २ ॥

अथापरिज्ञातस्वरूपे संशयादावप्रमाणत्वं दुर्ग्रहमिति तस्य स्वरूपमाविष्कुर्वाणस्तावत् प्रथमं संशयं लक्षयति–

**अतस्मिन् तदतदवगाहि ज्ञानं संशयः ॥३॥**

तद्रूपाभाववति वस्तुनि तद्रूपं तद्भिन्नरूपं चावगाहत इत्येवं शीलं ज्ञानं समिति समन्तात् शेत इवात्मा यस्मिन् सतीति संशयः, यथा स्थाणुर्वा पुरुषो वा । भवति हि स्थाणु-पुरुषसाधारणोर्ध्वतादिदर्शनेन, असति च तद्विशेषस्य स्कन्धकोटरादेः शिरः-पाण्यादेर्वा साधकबाधकप्रमाणे स्थाणुत्व-पुरुषत्वरूपनानाकोट्यवलम्बि संशयज्ञानमिति । एतेन सदसदात्मनि वस्तुनि सच्चाऽसच्चेतिप्रत्ययो न संशय इति सम्यक् प्रतियन्ति मनीषिण इति ॥ ३ ॥

अथ विपर्ययस्वरूपमाह–

**तदवगाहि विपर्ययः ॥ ४ ॥**

'अतस्मिन्' इत्यनुवर्त्तते । 'ज्ञानम्' इति चेहोत्तरत्र च । तद्रूपशून्यवस्तुनि तद्रूपमेवावगाहत इत्येवं शीलं ज्ञानं विपर्यासरूपत्वाद् विपर्ययः, यथा रजतत्वशून्यायां शुक्तिकायां चाकचिक्यादिना सादृश्यवशात् 'इदं रजतम्' इत्येवं रजताकारतया ज्ञानं भ्रमो विपर्ययोऽन्यथाख्यातिर्वोच्यते ॥ ४ ॥

अथानध्यवसायं दर्शयति–

**किमित्युल्लेख्यनध्यवसायः ॥ ५ ॥**

पथि गच्छतः पुंसः तृणस्पर्शादिगोचरमन्यत्रासक्तमनस्त्वात् 'एवंजातीयकमेवंनामकमिदं वस्तु' इत्यादिविशेषानुल्लेखि किमपि मया स्पृष्टमिति किमित्युल्लेखेन समुद्भव-

ज्ज्ञानमनिश्चयात्मकत्वादनध्यवसायः । बौद्धैः प्रमाणत्वेनाभिमतं निर्विकल्पकं ज्ञानमप्यनध्यवसायात्मकमेव, तस्यापि विशेषोल्लेखाभावात् । परोक्षविषयेऽप्यनध्यवसायो भवति यथा कस्यचिदपरिज्ञातगोजातीयस्य पुंसः क्वापि विपिननिकुञ्जे सास्नामात्रोपदर्शनात् पिण्डमात्रमनुमाय को नु खल्विह प्रदेशे प्राणी स्यादिति । एवं संशय-विपर्ययावपि परोक्षयोग्यविषयौ द्रष्टव्यौ, अयं चानध्यवसायो नानाकोट्यनवगाहनाद् विपरीतैककोट्यनवलम्बनाच्च न संशयो विपर्ययो वेति ताभ्यां पृथगेव॥५॥

इह शास्त्रे येषां लक्षणं निर्दिष्टं तल्लक्षणशून्यास्तद्वदाभासमानास्तदाभासा वेदितव्याः; तथाहि— प्रमाणसामान्यलक्षणशून्यास्तद्वदाभासमानाः प्रमाणाभासाः, यथाऽज्ञानात्मकः सन्निकर्षादिः, ज्ञानात्मकः संशयादिश्च एवं प्रमाणविशेषाभासा अपि । वक्ष्यमाणात् पुनरत्र प्रमाणस्य फलात्, सङ्ख्यानात्, विषयाच्च विपरीतस्वरूपं फलाभासं, संख्यानाभासं, विषयाभासं च द्रष्टव्यम् । एतच्च सर्वं सत्यस्वरूपप्रतिपत्तौ नानीषत्करप्रतिपत्तीत्युपेक्षितस्तन्निबन्धः सूत्रे भगवता सूत्रकारेण, वृत्तौ तु यथास्थानं सर्वं दर्शयिष्यत इति । अथाचेतनसन्निकर्षादेः प्रामाण्यं पराभिमतमपाकर्त्तुमाह—

**जडत्वेनाज्ञानाविरोधी सन्निकर्षादिरज्ञाननिवृत्त्यसामर्थ्याद् घटादिरिवाऽप्रमाणम्॥६॥**

सन्निकर्षोऽज्ञानाविरोधी, जडत्वात्, घटवत्; सन्निकर्षोऽज्ञाननिवृत्तिरूपफलासमर्थः, अज्ञानाविरोधित्वात्, तद्वत् । यो हि यं न विरुणद्धि नासौ तं निवर्त्तयति, यथान्धकाराविरोधी घटोऽन्धकारम्, विरुणद्धि चान्धकारं प्रकाशोऽतस्तमसौ निवर्त्तयति । इत्थं च जडः सन्निकर्षोऽज्ञानेन विरोधमनादधानः कथमज्ञानं दूरीकुर्यात्? अदूरीकुर्वतः पुनः कथमस्य प्रमाणपदवीपरिस्पर्शः? ।

तस्मादज्ञानदूरीकरणे तद्विरोधि ज्ञानमेव शरण्यमिति तदेव प्रमाणम्। हानादानोपेक्षास्वपि ज्ञानस्यैव प्रभुता, अतोऽपि तस्यैव प्रामाण्याऽधिकारः। स्वसंवेदनापटीयसश्च परावभासकत्वं सुतरामसम्भवम्। प्रकाशात्मा हि प्रदीपः परप्रकाशनप्रभुरित्यप्रकाशात्मा सन्निकर्षो घटादिवत् परप्रकाशे कथं प्रगल्भेत? इति सिद्धं स्वपरप्रकाशस्वभावं ज्ञानमेव प्रमाणमिति। न च स्वसंविदितत्वमसिद्धं ज्ञानस्य, 'घटमहं वेद्मि' इत्यादौ कर्तृकर्मवज्ज्ञप्तेरप्यवभासमानत्वात्। न चाप्रत्यक्षोपलम्भस्याऽर्थदृष्टिः प्रसिद्ध्यति। न च ज्ञानान्तरात्तदुपलम्भसम्भावना, अनवस्थादिदोषावतारात्। न चानुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसक्तिः, ज्ञातुर्ज्ञातृत्वेनेवानुभूतेरनुभूतित्वेनाऽनुभूतेः। न चानुभूतेरनुभाव्यत्वं दोषः, अर्थापेक्षयाऽनुभूतित्वात्, स्वापेक्षया चानुभाव्यत्वात्, एकस्य स्वपितृ-पुत्रापेक्षया पुत्रत्व-पितृत्ववद् विरोधानवकाशात्। प्रयोगा अपि— ज्ञानं प्रकाशमानमेवार्थं प्रकाशयति, प्रकाशकत्वस्य तथैवोपपत्तेः, प्रदीपवत्। नेत्रादीनामपि भावेन्द्रियरूपाणामेव प्रकाशमानत्वात् प्रकाशकत्वं बोध्यमिति न हेतुदोषः। ज्ञानं प्रकाशात्मकम्, अर्थप्रतीतित्वात्, व्यतिरेके घटः। ज्ञानं स्वप्रकाशे स्वावान्तरजातीयानपेक्षि, वस्तुत्वात्, घटवत्। न च ज्ञानं स्वान्यप्रकाश्यम्, वस्तुत्वात्, घटवदिति युक्तम्, अप्रयोजकत्वात्। न हि घटस्य वस्तुत्वप्रयुक्तं परप्रकाश्यत्वमपि तु बुद्धिव्यतिरिक्तत्वप्रयुक्तम्। शक्यते हि वक्तुम्— 'अस्तु वस्तुत्वं मास्तु परप्रकाश्यत्वम्' इति। न च कश्चिद् बाधः। न च भवति विपक्षबाधकप्रमाणमन्तरेण हेतु-साध्ययोर्व्याप्त्यवधारणमिति नासिद्धं स्वसंविदितत्वं ज्ञानस्येति। एतेन "अर्थोपलब्धिहेतुः प्रमाणम्" इति प्रमाणलक्षणं परेषामसाधु भावनीयम्। तत्र ह्यर्थोपलब्धौ हेतुत्वं यदि करणत्वं विवक्षितम्, तर्हि तादृशकरणताया ज्ञानस्यैव सम्भवेन तदेव प्रमाणलक्षणत्वेन युक्तं निर्देष्टुम्।

न चेन्द्रियसन्निकर्षोऽप्यर्थोपलब्धौ करणीभावधुरन्धरः । साधकतमं हि करणमुच्यते । यत्र हि प्रमात्रा व्यापारिते सत्यवश्यं कार्योदयः, अन्यथा पुनरनुदय एव तत् तत्र साधकतमम् , छिदायां दात्रवत् । न च नभसि नयनसन्निकर्षसद्भावेऽपि तद्गोचरः प्रत्यय आविर्भवति । न च रूपस्य सहकारिणस्तत्र विरहात्तदभाव इति युक्तं वक्तुम् , रूपस्यापि रूपशून्यत्वेन प्रमानुदयप्रसङ्गात् । न हि रूपे रूपमस्ति, निर्गुणत्वाद् गुणानाम् । न चावयवगतं रूपमवयविरूपोपलम्भे सहकारि भवेदिति प्रेर्यम् , त्र्यणुकावयविरूपोपलब्धेरनुपपत्तेः । न हि भवति तदवयवीभूतद्व्यणुकत्रयवर्त्ति रूपमुपलब्धिगोचरः । अनुपलब्धस्यापि तस्य सहकारित्वोपगमे तप्तजलेऽपि कृशानुविषयचाक्षुषप्रत्ययः प्रादुःष्यात् , तदवयवेष्वनुपलभ्यमानस्यापि रूपस्य सद्भावात् । किञ्च, सुषुप्तावस्थायां शरीरव्यापिनो मनसः स्पर्शनादीन्द्रियेण तस्य च तूलिकादिना सन्निकर्षसत्त्वेऽपि स्पर्शादिसंवेदनानुदयोऽनुभवसिद्धः । न चाणुपरिमाणत्वेन मनसः शरीरव्यापित्वासम्भवात् तदानीं स्पर्शनादीन्द्रियसन्निकर्षानुपपत्तिरिति वाच्यम् , इन्द्रियत्वेन हेतुना नयनवद् मनसोऽणुपरिमाणत्वप्रतिक्षेपात् । शरीरव्यापित्वे बाधकाभावाच्च । युगपज्ज्ञानोत्पत्तिप्रसङ्गस्तु तादृक्क्षयोपशमविशेषेणैव निराकृतः, इति सन्निकर्षसद्भावेऽपि नावश्यं संवेदनोदयः; नापि तदभावे तदभाव एव, प्रातिभप्रत्यक्षाणाम् , आर्षसंवेदनविशेषाणां च तत्कालाविद्यमानविषयविषयितया असन्निकर्षेऽपि समुत्पादात् , तन्न सन्निकर्षोऽन्वयव्यतिरेकसिद्धार्थोपलब्धिकारणतासिद्धिसम्बन्धबन्धुरः । व्यवधानेन क्वचित् फलानुकूलत्वेन साधकतमत्वस्वीकारे दधिभोजनादेरपि तत्प्रसङ्गः ।

अथ निमित्तत्वसामान्यपरं हेतुपदम् , तदा निमित्तत्वसामान्यस्य सर्वकारकसाधारणतया कर्त्तृ-कर्मादेरपि प्रमाणत्वमास-

ज्येत । ननु कथं तर्हि चक्षुषा प्रमीयते इत्यादिव्यवहारः ? उपचारादिति ब्रूमहे, उपचारप्रवृत्तौ च सहकारित्वं निबन्धनम् । यदाहुः श्रीरत्नप्रभाचार्याः—

"अर्थस्य प्रमितौ प्रसाधनपटु प्रोचुः प्रमाणं परे
तेषामञ्जन-भोजनाद्यपि भवेद् वस्तु प्रमाणं स्फुटम् ।
आसन्नस्य तु मानता यदि तदा संवेदनस्यैव सा
स्यादित्यन्धभुजङ्गरन्ध्रगमवत्तीर्थ्यैः श्रितं त्वन्मतम्" ॥१॥ इति

उक्तं चास्माभिरपि—

"मानं शासति सन्निकर्षमपि ये कीदृक् प्रभो ! तद्भ्रमः
स्वाज्ञानः स्वयमेष यत्किमपरज्ञानं सृजेत् कुम्भवत् ।
अन्येषां हि सृजेत्प्रकाशनमसौ दीपः प्रकाशात्मकः
प्रत्यक्षे सहकारिताभ्युपगमं त्वेतस्य को वारयेत्" ? ॥१॥ इति

"अविसंवादिज्ञानं प्रमाणम्" इति तपनबन्धुतनयाः, तदप्यसुन्दरम्, बौद्धा हि प्रत्यक्षा-ऽनुमानरूपे द्वे प्रमाणे आमनन्ति, तत्र न तावत् प्रत्यक्षस्याऽविसंवादित्वं संभवति, निर्विकल्पत्वेनाङ्गीकृतस्य तस्य स्वविषयानिर्णायकत्वेन संशय-विपर्यया-ऽनध्यवसायात्मकसमारोपविरोधित्वाभावात् । किंच, अविकल्पज्ञानस्य व्यवहारजननाऽनिपुणत्वे प्रमाणत्वेन किमायातम् ?, उत्तरकालभाविनो व्यवहारधुराधौरेयाद् विकल्पात् तस्य प्रामाण्याभ्युपगमे याचितमण्डनन्यायानुप्रवेशः । वरं च व्यवहारहेतोर्विकल्पधिय एव प्रामाण्यमङ्गीकर्तुम् ।

अनुमानस्याऽपि तन्मतानुसारेण अपरमार्थभूतसामान्यगोचरत्वेन कुतस्त्याऽविसंवादित्वव्यवस्था ? ।

"अनधिगतार्थाधिगन्तृ प्रमाणम्" इति भाट्टाः । तदप्ययुक्तम्— अनधिगतपदव्यवच्छेद्याभावात् । न च स्मरणव्यवच्छित्तिफलकमनधिगतपदम्, स्मरणस्य प्रमाणत्वेनोपपाद-

यिष्यमाणत्वात् । न च प्रमाणमनधिगतार्थाधिगन्त्रेव भवति, एकत्र नीलादौ प्रमातृज्ञानानां प्रमाणत्वसद्भावात्; तेषां चान्योन्यं गृहीतग्राहित्वात् । अपि चागृहीतग्राहि ज्ञानं भवत्येव न, सर्वबुद्धैः सर्ववस्तूनां सर्वदा ग्रहणात्; सर्वबुद्धस्य चोपपादयिष्यमाणत्वात् । अधिकं चात्रोक्तमेव; अनुसन्धेयं चान्यत इत्येवमन्येषामपि पराभिमतप्रमाणलक्षणानामसाधुभावः स्वयमूहनीयः; विस्तरभयात्तु नेहोच्यते ॥ ६ ॥

अथ प्रमाणस्य स्वभावभूतं प्रामाण्यं तत्प्रत्यनीकमप्रामाण्यं चोत्पद्यमानं निर्णीयमानं च परापेक्षि स्वतो वेत्यारेकामधरीकर्तुं कीर्तयति—

**प्रामाण्या-ऽप्रामाण्ये परत उत्पादिष्णुनी,**
**निर्णये तु स्वतोऽपि ॥ ७ ॥**

यद्यपि प्रमाणप्रकरणे तत्स्वभावभूतं प्रामाण्यमेव युक्तं चिन्तयितुं तथापि तत्प्रत्यनीकभावेनोपस्थितस्याऽप्रामाण्यस्यापि युक्तचिन्तनतया प्रामाण्यतुल्यकक्षतयोपादानं नौचितीमतिक्रामति । प्रमेयाव्यभिचारित्वं ज्ञानस्य प्रामाण्यम्, प्रमेयव्यभिचारित्वं चाप्रामाण्यम्, प्रमेयव्यभिचारित्वं च ज्ञानस्य स्वान्यग्राह्यापेक्षया ज्ञेयम्, स्वस्मिन् व्यभिचारस्यासम्भवात् । तथा च सर्वं ज्ञानं स्वापेक्षया प्रमाणमेव, बहिरर्थापेक्षया तु किञ्चित् प्रमाणं किञ्चित् तदाभासमिति निगर्वः । एते च प्रामाण्या-ऽप्रामाण्ये परतो ज्ञानकारणगतगुणदोषापेक्षया उत्पद्येते इत्येवंशीले उत्पादिष्णुनी; निर्णये तु स्वतोऽपि अपिपदात्परतःपदाऽनुकर्षः, अभ्यासदशायां स्वतो निश्चीयते, अनभ्यासदशायां तु परत इत्यर्थः । एतेन प्रामाण्यस्योत्पत्तिं निर्णयं च स्वत एवाभ्युपेयुषां मीमांसकानां मतिमोह एव ध्वनितः ।

तथाहि– न हि ज्ञानसामान्यसामग्रीमात्रजन्यत्वलक्षणं स्वतस्त्व-मुत्पत्तौ संभवति, प्रामाण्यस्य संशयादावपि तथात्वेन प्रामाण्यसमवतारात् । अयमर्थः–ज्ञान सामान्यसामग्रीसाम्येऽपि संशयादिज्ञानमप्रमाणम्, इतरच्च प्रमाणमिति विभागे केनापि निबन्धनेनाऽवश्यं भवनीयम्; ततो यथा संशयादावप्रामाण्ये दोषादिकमङ्गीक्रियते तथा प्रामाण्येऽपि तत्प्रत्यनीकं कारणं गुणरूपमवश्यं वक्तव्यम् । अन्यथा प्रमाणा-ऽप्रमाणविभागानुपपत्तेः, परतः प्रामाण्यमप्रामाण्यं तु स्वत इत्येवमपि पुनर्विपर्ययेण वदतो वादिनः को निरोधावकाशः ? । न्याय्यं चैतत्, न हि पटसामान्यसामग्रीमात्रं रक्तपटे हेतुः; तद्वद् ज्ञानसामान्यसामग्रीमात्रं प्रमाणज्ञाने कथं हेतुभावेन न्याय्याभ्युपगममिति ? । निर्णयः पुनः प्रामाण्यस्याऽभ्यासदशायां स्वत एव । तथाहि– अभ्यस्ते विषये जलमेतदिति ज्ञाने समुत्पन्ने ज्ञानस्वरूपनिर्णयसमय एव तद्गतं प्रामाण्यमपि निर्णीतं भवति, ज्ञानस्वरूपनिर्णयश्चात्मन एवेति तद्गतप्रामाण्यनिर्णयोऽपि तत एवेत्यर्थः । इतरथोत्तरक्षणे निःशङ्कप्रवृत्तेरनुपपत्तेः । अनभ्यस्ते तु विषये जलज्ञाने जाते जलज्ञानं मम जातमिति ज्ञानस्वरूपज्ञप्तावपि तत्प्रामाण्यावधारणमन्यत एव भवति । अपरथोत्तरकाले संशयाऽयोगात्; भवति च संशयो जलज्ञानं मम जातं तत्किं जलमाहोस्विन्मरीचिकेति, ततः कमलपरिमल–शिशिरमन्दपवनप्रचारप्रभृतिभिर्जलमवधारयता तत्र प्रामाण्यमवधारितं भवतीति नान्तरीयार्थदर्शनतः परत एव तत्र प्रामाण्यनिश्चयः । परत्र च स्वत एव प्रामाण्यनिर्णयान्नानवस्थादौस्थ्यावस्था । अनुमाने तु सर्वत्रापि सर्वथा समस्तसमस्तव्यभिचारारेके स्वत एव प्रामाण्यनिर्णयोऽव्यभिचारिलिङ्गसमुद्भवात्; न हि लिङ्गाकारं ज्ञानं लिङ्गं विना न च लिङ्गं लिङ्गिनमृते, इति सर्वमुपपन्नम् ॥ ७ ॥

"प्रमाण-विषय-फल-प्रमातृषु चतुर्षु विधिषु तत्त्वं परिसमाप्यते"

इत्याह भाष्यकारो वात्स्यायनः । इत्यर्थोपपत्त्यङ्गेषु तेषु चतुर्षु प्रमाणस्वरूपमाविष्कृत्य साम्प्रतं तद्विषयं प्रादुष्करोति—

**उत्पाद-व्यय-ध्रौव्ययुक्तं वस्तु प्रमाणस्य विषयः ॥ ८ ॥**

सर्वं हि वस्तु प्रतिक्षणमुत्तराकारस्वीकाररूपेणोत्पादेन, पूर्वाकारपरिहारलक्षणेन व्ययेन, उत्पादव्ययसाधारणत्रिकालवर्त्तिद्रव्याकाररूपेण ध्रौव्येण युक्तं सम्बद्धं प्रत्यक्षसिद्धम् । अयमर्थः— सर्वं खलु वस्तु अनन्तधर्मात्मकं प्रज्ञप्तं तथैव वस्तुस्वरूपोपपत्तेः, यदाह—"अनन्तधर्मात्मकमेव तत्त्वमतोऽन्यथा सत्त्वमसूपपादम्" इति । यच्चानन्तधर्मात्मकं न भवति नेदं वस्तु भवति, यथा गगनेन्दीवरम् । अनन्तधर्मात्मकत्वं चात्मनि तावत् साकार-निराकारोपयोगिता, कर्तृत्वम्, भोक्तृत्वम्, अमूर्त्तत्वम्, असंख्यातप्रदेशात्मकत्वम्, प्रदेशाष्टकनिश्चलत्वम्, जीवत्वमित्यादिकाः सहभाविधर्माः; हर्ष-विषाद-शोक-सुखा-ऽसुख-देव-नारक-तिर्यग्-मानुषत्वादयश्च क्रमभाविनो धर्माः।अधर्मास्तिकायादिष्वजीवपदार्थेषु असङ्ख्येयप्रदेशात्मकत्वम्, गत्याद्युपग्रहकारित्वम्, मत्यादिज्ञानगोचरत्वम्, तत्तदवच्छेदकावच्छेद्यत्वम्, अवस्थितत्वम्, अरूपित्वम्, एकद्रव्यत्वम्, निष्क्रियत्वमित्यादयः । कलशे पुनः, आमत्वम्, पाकजरूपादिमत्त्वम्, पृथुबुध्नोदरत्वम्, कम्बुग्रीवत्वम्, जलादिधारणाहरणक्षमत्वम्, इत्यादिज्ञानज्ञेयत्वम्, नवत्वम्, पुराणत्वमित्यादयः। एवं शब्देऽपि उदात्ता-ऽनुदात्त-स्वरित-विवृत-संवृत-घोषवदघोषता-ऽल्पप्राण-महाप्राणतादितत्तदर्थप्रत्यायनशक्त्यादयश्चावसेयाः । एवं सर्ववस्तुषु नानानयमताभिज्ञेन तत्तत्पर्यायान् प्रतीत्यानन्तधर्मात्मकत्वमवधेयम् । इत्थं च सर्वं वस्तु तत्तद्धर्मात्मनोत्पद्यते,अन्यधर्मात्मना च विपद्यते, अन्वयिद्रव्येण च सदान्वितं तिष्ठति, यथा केयूरं भङ्क्त्वा कटको विधीयते,

तत्र केयूरपर्यायो ध्वस्तः, कटकपर्यायश्चोत्पन्नः, सुवर्णद्रव्यं तूभयत्राविशिष्टम् । एवं सर्वत्र पर्यालोचनीयम्, यदाह— "प्रतिक्षणोत्पादविनाशयोगि स्थिरैकमध्यक्षमपीक्षमाणः" इति । एतेनैकान्तनित्यानित्यप्रवादाः प्रतिक्षिप्ताः, वस्तुन एकान्तनित्यानित्यत्वे क्रमेण वाऽक्रमेण वा अर्थक्रियानुपपत्तेः । तथाहि— एकान्तनित्यस्य प्रथमक्रियाकाल एव कालान्तरभाविनीनां क्रियाणां करणौचित्ये कालान्तरे क्रियाशून्यत्वलक्षणाऽवस्तुत्वप्रसक्तिः । न हि समर्थः कालक्षेपं सासहिः, न वा कालक्षेपं सहिष्णोः सामर्थ्ययोगः, तत्तत्सहकारिसमवधानापेक्षायामपि "सापेक्षमसमर्थम्" इति न्यायोपढौकितोऽसामर्थ्योदयस्तदवस्थ इति क्रमेणार्थक्रियाकारित्वं न संभवति । अक्रमेणापि तथा एकेन भावेन सकलकालकलाकलापभाविसर्वक्रियाणां युगपत्करणस्याऽनुभवपथानवतारात्; करणे वा क्षणान्तरेऽकिञ्चित्करत्वेनावस्तुत्वानुषङ्गात् । एकान्तानित्योपि पक्षस्तथैव न्यायाक्षमः, एकान्तानित्यस्य प्रतिक्षणविनाशित्वेन देशकृतस्य कालकृतस्य वा पौर्वापर्यरूपक्रमस्यैवाऽभावेन क्रमेणार्थक्रियाऽसम्भवात्, सन्तानस्याप्यवस्तुत्वेन तदपेक्षया पूर्वोत्तरक्षणानां क्रमाऽयोगात् । वस्तुत्वस्वीकारेऽपि तस्य क्षणिकत्वेन क्षणाद् विशेषाभावात् । अक्षणिकत्वे क्षणभङ्गसिद्धान्तव्याघातात् । एवमक्रमेणापि नार्थक्रिया, एकस्य बीजपूरादिक्षणस्य युगपदनेकेषां रसादिक्षणानामेकस्वभावेन जनकत्वाङ्गीकारे एकस्वभावजत्वेन रसादिक्षणानामैक्यप्रसक्तेः । किञ्चिद्रसादिकं सहकारितया किञ्चिद्रूपादिकमुपादानतयेत्येवंनानास्वभावैस्तदुपगमे तेषामनात्मभूतत्वे स्वभावत्वव्याघातात् । आत्मभूतत्वे च तस्यानेकस्वभावत्वादनेकत्वप्रसङ्गात् स्वभावानां वा एकत्वापत्तेः । स्याद्वादे तु पूर्वोत्तराकारपरिहारस्वीकारास्थितिलक्षणपरिणामेन भावानामर्थक्रियोपपत्तिरविरुद्धा । न चैकस्मिन्नर्थेऽन्योन्यव्याहतधर्माध्यासा-

योगादसन् स्याद्वाद इति सम्यग्भाषितम्, नित्यानित्यपक्षविलक्षणस्य पक्षान्तरस्याभ्युपगमात् । तथैव सर्वेषामनुभवसिद्धेः ।

वदन्ति च—

"भागे सिंहो नरो भागे योऽर्थो भागद्वयात्मकः ।
तमभागं विभागेन नरसिंहं प्रचक्षते" ॥ १ ॥ इति

वैशेषिकैरपि चित्ररूपस्यैकस्यावयविनः स्वीकाराद् एकस्यैव पटादेः चलाचलरक्तारक्तावृतानावृतत्वादिविरुद्धधर्माणामुपलब्धेः । सौगतैरपि चित्रपटीज्ञाने नीलानीलयोर्विरोधानङ्गीकारात् । यदाह भगवान् श्रीहेमचन्द्रः—

"क्रमाऽक्रमाभ्यां नित्यानां युज्यतेऽर्थक्रिया न हि ।
एकान्तक्षणिकत्वेपि युज्यतेऽर्थक्रिया न हि ॥ १ ॥
आत्मन्येकान्तनित्ये स्यान्न भोगः सुख-दुःखयोः ।
एकान्तानित्यरूपेऽपि न भोगः सुख-दुःखयोः ॥ २ ॥
पुण्य-पापे बन्ध-मोक्षौ न नित्यैकान्तदर्शने ।
पुण्य-पापे बन्ध-मोक्षौ नानित्यैकान्तदर्शने ॥ ३ ॥
सत्त्वस्यैकान्तनित्यत्वे कृतनाशाऽकृतागमौ ।
स्यातामेकान्तनाशेऽपि कृतनाशाऽकृतागमौ ॥ ४ ॥
यदा तु नित्यानित्यत्वरूपता वस्तुनो भवेत् ।
यथात्थ भगवन्नैव तदा दोषोऽस्ति कश्चन ॥ ५ ॥
गुडो हि कफहेतुः स्याद् नागरं पित्तकारणम् ।
द्वयात्मनि न दोषोऽस्ति गुड-नागरभेषजे ॥ ६ ॥
द्वयं विरुद्धं नैकत्राऽसत्प्रमाणप्रसिद्धितः ।
विरुद्धवर्णयोगो हि दृष्टो मेचकवस्तुषु ॥ ७ ॥
विज्ञानस्यैकमाकारं नानाकारकरम्बितम् ।
इच्छंस्तथागतः प्राज्ञो नाऽनेकान्तं प्रतिक्षिपेत् ॥ ८ ॥
चित्रमेकमनेकं च रूपं प्रामाणिकं वदन् ।
यौगो वैशेषिको वापि नानेकान्तं प्रतिक्षिपेत् ॥ ९ ॥

इच्छन् प्रधानं सत्त्वाद्यैर्विरुद्धैर्गुम्फितं गुणैः ।
साङ्ख्यः सङ्ख्यावतां मुख्यो नानेकान्तं प्रतिक्षिपेत् ॥१०॥
विमतिः सम्मतिर्वापि चार्वाकस्य न मृग्यते ।
परलोका-ऽऽत्म-मोक्षेषु यस्य मुह्यति शेमुषी ॥ ११ ॥
तेनोत्पाद-व्यय-ध्रौव्यसम्भिन्नं गोरसादिवत् ।
त्वदुपज्ञं कृतधियः प्रपन्ना वस्तु वस्तुसत् ॥ १२ ॥

एवं सदसदेकान्तोऽपि प्रतिक्षिप्तो द्रष्टव्यः सर्वस्य वस्तुनः सदसदात्मकत्वात् । ननु कथमेकमेव वस्तु सच्चाऽसच्च भवितुमर्हति?, सत्त्वपरिहारेणाऽसत्त्वस्य असत्त्वपरिहारेण सत्त्वस्य च व्यवस्थानात्, अपरथा तयोरविशेषापत्तेः । ततश्च तद्यदि सत् कथमसत्?, यदि चासत् कथं सदिति चेत्? । उच्यते, यतो येनैव प्रकारेण सत्त्वं तेनैवाऽसत्त्वम्, येनैव चासत्त्वं तेनैव सत्त्वं यदि स्वीक्रियते, स्यात् तदा व्याघातः । यदा तु स्वद्रव्य-क्षेत्र-काल-भावरूपेण सत्, परद्रव्यक्षेत्रकालभावरूपेण चासत् तदा को विरोधावकाशः? । तथाहि—यथा घटवस्तु स्वद्रव्यादिभिः सत्, एवं परद्रव्यादिभिरपि यदि स्यात् तदा तद् घटवस्त्वेव न स्यात्, परद्रव्यादिरूपेणापि सत्त्वात् तदन्यस्वात्मवत् । तथा यदि यथा परद्रव्यादिरूपेणाऽसत् एवं स्वद्रव्यादिरूपेणापि स्यात्, इत्थमपि नेदं वस्तु स्यात् खरविषाणवत् । तदेवं वस्तुस्वरूपान्यथाऽनुपपत्तेः सदसदनेकान्तः कान्त एव । घटादिकं हि द्रव्यतः पार्थिवत्वेन सत् नावादित्वेन; क्षेत्रत इहत्यत्वेन सत् न पाटलिपुत्रकादित्वेन; कालतो वासन्तिकत्वेन सत् न ग्रैष्मिकादित्वेन; भावतः श्यामत्वेन सत् न रक्तिमादिना, अन्यथा इतररूपापत्त्या तत्स्वरूपहानिप्रसङ्ग इति वज्रलेपायतेऽनेकान्तः ॥ ८ ॥

अथ प्रमाणस्य फलमभिधत्ते—

## फलमज्ञानव्युदासः ॥ ९ ॥

अज्ञानस्य संशयादेर्व्युदासो विध्वंसः स्वपरव्यवसितिरूपः प्रमाणस्य फलम्, तस्य प्रमाणेन प्रसाधनात्; यद्धि येन प्रसाध्यते तत्तस्य फलम्, यथा प्रदीपस्य ध्वान्तसङ्घातविघातः। प्रसाध्यते च प्रमाणेन स्वपरपरिच्छेदलक्षणोऽज्ञानध्वंस इति तत्तस्य फलम्, एतच्च सर्वप्रमाणानां फलमानन्तर्येण बोद्धव्यं उत्तरत्र पारम्पर्येणेति निर्देशात् ॥ ९ ॥

प्रमाणं तावत् प्रत्यक्षं च परोक्षं चेति द्विविधं वक्ष्यते, तत्र प्रत्यक्षस्य पारमार्थिक-सांव्यवहारिकरूपौ द्वौ भेदौ, तत्र पारमार्थिकप्रत्यक्षस्य केवलज्ञान-मनःपर्यायज्ञाना-ऽवधिज्ञानानि त्रयः प्रकाराः, परोक्षं तु स्मृति-प्रत्यभिज्ञा-तर्का-ऽनुमाना-ऽऽगमैः पञ्चधा, तत्र पारमार्थिकप्रत्यक्षप्रकारभूतकेवलज्ञानस्य पारम्पर्येण फलं व्याहरति—

## पारम्पर्येण केवलस्योपेक्षा ॥ १० ॥

निखिलवस्तुसाक्षात्कारिस्वभावस्य केवलज्ञानस्य परम्परं फलमुपेक्षा हानोपादानेच्छाविरहात् माध्यस्थ्यमौदासीन्यमित्यर्थः। सिद्धप्रयोजना हि केवलिनः सर्वत्रोदासीना एव भवन्ति हेयस्य संसारतत्कारणस्य हानात्, उपादेयस्य मोक्षतत्कारणस्य चोपादानात् ॥ १० ॥

अथ परिशिष्टप्रमाणानां पारम्पर्येण फलमाचष्टे—

## शेषस्य हाना-ऽऽदानोपेक्षाधीः ॥ ११ ॥

केवलज्ञानव्यतिरिक्तस्योक्तलक्षणस्य परिशेषस्याऽशेषस्य प्रमाणस्य पारम्पर्येण फलम्, हानधीः, आदानधीः, उपेक्षाधीश्च हेये वस्तुनि जहामीति बुद्धिः, आदेये वस्तुनि आददे इति बुद्धिः, उपेक्षणीये अर्थानर्थाप्रसाधकत्वेन आदानहानानर्हे च वस्तुनि उपेक्षे इत्येवं बुद्धिः। ननु नास्ति हेयोपादेयाभिन्न उपेक्षणीयोऽर्थः, तस्यानुपादेयत्वेन हेयेन्तःपातादिति चेद्। न, अहेयत्वादुपादेय एवान्त-

भावप्रसङ्गात्, उपेक्षणीय एव च मुर्द्धाभिषिक्तोऽर्थो योगिभिस्त-स्यैवार्यमाणत्वात् । अस्मदादीनामपि हेयोपादेयापेक्षयोपेक्षणीय एव भूयानर्थः; तन्नायं सर्वजनानुभवसिद्धिभगवतीप्रसादलब्धात्मोपेक्षणीय उपेक्षणीयोऽर्थ इति ॥ ११ ॥

साम्प्रतं प्रमाणफलयोरेकान्तभेदाभेदाभ्युपगममपाकरोति–

## तयोर्भेदाऽभेदः ॥ १२ ॥

तयोः प्रमाणफलयोर्भेदोऽपि कथञ्चित्, अभेदोऽपि कथञ्चिद् बोद्धव्यः, इतरथा प्रमाणफलव्यवहारानुपपत्तेः । न चोपादानबुद्ध्यादिना प्रमाणाद्भिन्नेन व्यवहितफलेन व्यभिचारः, उपादानबुद्ध्यादिकं हि प्रमाणस्य फलमप्यस्ति, प्रमाणाच्च सर्वथाभिन्नमप्यस्तीत्येकान्तभेदेऽपि नानुपपन्नः प्रमाणफलव्यवहार इति वक्तुं युक्तम्, उपादानबुद्ध्यादेरेकप्रमातृतादात्म्येन प्रमाणात् कथञ्चिदभेदस्यापि व्यवस्थानात्, प्रमाणतया परिणतस्यैवात्मनः फलरूपेण परिणतिप्रत्ययात् । यः प्रमिमीते स एवोपादत्ते जहाति उपेक्षते चेति सर्वसंव्यवहारिभिरस्खलितमनुभवात् । अपरथा इमे प्रमाणफले स्वकीये, एते पुनरन्यदीये इत्येवं स्वपरयोः प्रमाणफलव्यवस्थाविप्लवापत्तेः ।

अथ यत्रैवात्मनि प्रमाणं समवेतं फलमपि तत्रैव समवेतमितिसमवायलक्षणप्रत्यासत्तितः प्रमाणफलव्यवस्थानान्नात्मान्तरे तदापत्तिरिति चेद् । न, समवायस्य नित्यत्वात्, व्यापकत्वात्, नियतात्मवत्सर्वात्मस्वपि अविशेषात्, न ततः प्रतिनियतप्रमातृसंम्बन्धप्रतिनियमसिद्धिरिति । तदित्थमुपादानबुद्ध्यादौ व्यवहितेऽपि फले प्रमाणतोऽभेदस्याप्युपपत्तेर्न तेन प्रकृतहेतोर्व्यभिचारकलङ्कः । नापि अज्ञाननिवृत्तिस्वरूपेण प्रमाणतोऽभिन्नेन साक्षात्फलेन व्यभिचारः प्रकृतहेतोश्चिन्तनीयः, तस्यापि कथञ्चित्प्रमाणाद् भेदेनोपपत्तेः साध्यसाधनरूपेण प्रमाणफलयोर्व्यवस्थानात् । ये हि

साध्यसाधनभावेन प्रतीयेते ते परस्परं भिद्येते, यथा कुठारच्छिदे; प्रतीयेते च साध्यसाधनभावेन प्रमाणाऽज्ञाननिवृत्त्याख्यफले । प्रमाणं हि करणाख्यं साधनं स्वपरव्यवसितौ साधकतमत्वात्, स्वपरव्यवसितिक्रियारूपाज्ञाननिवृत्त्यभिधं फलं तु साध्यं प्रमाणनिर्वर्त्यत्वादिति नैकान्ततः प्रमाणफलयोरभेदसिद्धिरिति सिद्धं भिन्नाभिन्नं प्रमाणात् फलम् ।

किञ्च प्रमातुरपि स्वपरव्यवसितिक्रियायाः कथञ्चिद् भेदः, कर्तुः क्रियायाश्च साधकसाध्यरूपेणोपलम्भात्; कर्त्ता हि साधकः स्वतन्त्रत्वात्, क्रिया च साध्या कर्तृनिष्पाद्यत्वात् । न च क्रिया क्रियावतः सकाशादभिन्नैव भिन्नैव वा प्रतिनियतक्रियाक्रियावद्भावभङ्गप्रसङ्गसमवतारादिति ॥

अत्राह कश्चित्– नन्वेष सकलः प्रमाणफलव्यवहारः सांवृत एव कल्पनाशिल्पिसमारचित एवेत्यर्थः, इति विफल एवायं प्रमाणफलावलम्बनः स्याद्वादिनां भेदाभेदप्रतिष्ठोपक्रम इति । सोयमुन्मत्तालापः, तद्यथा सांवृतप्रमाणफलव्यवहारवादिनाऽपि सांवृतत्वं प्रमाण-फलयोः परमार्थवृत्त्या तावदेषितव्यम्, तच्चासौ प्रमाणतः स्वीकुर्याद्, अप्रमाणतो वा ? । न तावदप्रमाणात्, तस्याऽकिञ्चित्करत्वात् । प्रमाणाच्चेदेवं तर्हि सांवृतत्वग्राहकं प्रमाणं सांवृतं वा, असांवृतं वेति वक्तव्यम् ? । आद्ये कथं तस्मादपारमार्थिकात् पारमार्थिकस्य सकलप्रमाणफलव्यवहारसांवृतत्वस्य सिद्धिस्तथा च पारमार्थिक एव समस्तः प्रमाणफलव्यवहारः प्राप्तः । द्वितीये भग्ना खलु निखिलप्रमाणफलव्यवहारसांवृतत्वप्रतिज्ञा अनेनैव व्यभिचारात्; तस्मात्पारमार्थिक एव प्रमाणफलव्यवहारः सकलपुरुषार्थसिद्धिहेतुः स्वीकर्त्तव्य इति ॥१२॥

इत्याचार्यश्रीविजयधर्मसूरीश्वरविहितायाः प्रमाणपरिभाषाया वृत्तिभूते
मुनिश्रीन्यायविजयप्रणीते न्यायालङ्कारे प्रमाणसामान्य-
स्वरूपनिरूपणप्रवणः प्रथमः परिच्छेदः ॥१॥

अर्हम् ।

# द्वितीयः परिच्छेदः ।

अथ प्रमाणं विभजते—

## तद् द्विविधं प्रत्यक्षं च परोक्षं च ॥१॥

तदिति प्रमाणम्, द्वे विधे प्रकारौ यस्येति द्विविधं प्रत्यक्षं च परोक्षं चेति, अक्षमिन्द्रियम्, प्रतिः प्रतिगतार्थः, इन्द्रियं प्रतिगतमिन्द्रियाधीनतया समुद्गतं ज्ञानं प्रत्यक्षमित्यर्थः । नन्वेवं मानसप्रत्यक्षे आत्ममात्राऽपेक्षप्रत्यक्षे च कथं प्रत्यक्षशब्दवाच्यतोपपत्तिरिति चेत् ? । सत्यं, व्युत्पत्तिप्रदर्शनं पुनरेतत्, प्रवृत्तिनिमित्तं तु साक्षात्करणत्वं वक्ष्यते, इति तत्प्रवृत्तिनिमित्तस्य तत्र सद्भावान्नोक्तानुपपत्तेरवकाशः । अथवा अश्नुते अक्ष्णोति वा व्याप्नोति सकलद्रव्य-क्षेत्र-काल-भावानित्यक्षो जीवस्तं प्रतिगतं साक्षादाश्रितमश्नाति भुङ्क्ते रूपादिसुखादिविषयान् अनेन आत्मा इत्यक्षं चक्षुरादि मनश्च तत्प्रतिगतं निमित्तभावेनाश्रितं ज्ञानं प्रत्यक्षम्, इति न काचिदनुपपत्तिः ।

अक्षाणामिन्द्रियाणां परम्, इन्द्रियव्यापारानपेक्षं मनोव्यापारेणाऽसाक्षादर्थपरिच्छेदसाधकतमं ज्ञानं परोक्षम् । चकारद्वयं प्रमाणद्वयस्यापि प्रामाण्यं प्रति न कश्चिद् विशेष इति ज्ञापनार्थम्, तेन द्वयस्यापि तुल्यकक्षताऽवधेया नातोऽनुमानादिपरोक्षापेक्षया प्रत्यक्षप्रमाणस्य ज्येष्ठत्वमुपपत्तिमदिति ।

विभागस्य चावधारणफलत्वात् द्वयमेवैतत् प्रमाणं न न्यूनं न वाऽधिकं तेन प्रत्यक्षमेकं प्रमाणमिति चार्वाकाः । प्रत्यक्षमनुमानं चेति द्वयम्; इति सौगताः, काणादाश्च । सागमं तत्त्रयम्; इति साङ्ख्याः । सोपमानानि तानि चत्वारि; इति

नैयायिकाः । अर्थापत्त्या तानि पञ्चेति प्राभाकराः । अभावेन तानि षट्; इति भाट्टाश्च अपाकृताः । अग्रेतनसूत्रेण प्रत्यक्षेतरप्रमाणव्यवस्थापनेनाऽनुमानस्य स्मरणप्रत्यभिज्ञान तर्कागमानां च परोक्षविधीनां तत्तल्लक्षणसूत्रे प्रमाणत्वस्य प्रसाधयिष्यमाणत्वात्, प्रत्यभिज्ञायामुपमानस्याऽनुमानेऽर्थापत्तेश्च; तत्तल्लक्षणसूत्रेऽन्तर्भावयिष्यमाणत्वात्, तृतीयसूत्रे अभावस्य निर्विषयतोपदर्शनेन प्रामाण्यस्य निराकरिष्यमाणत्वाच्च ।

येऽपि पुनः सम्भवैतिह्यप्रातिभरूपाः प्रमाणविधयः प्रावादिषत कैश्चित्; तत्रापि समुदायेन समुदायिनोऽवगम इत्येवं रूपः सम्भवः सम्भवति खार्य्यां द्रोणः खारीत्वादित्याद्यनुमानान्तर्गत एव द्रष्टव्यः । ऐतिह्यं तु अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमितीहोचुर्वृद्धा इति, यथा इह वटे यक्षः प्रतिवसतीत्यादि तदनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वादप्रमाणम्; आप्तप्रवक्तृकत्वनिर्णये तु आगम एव । प्रातिभं च यदि अद्य मे महीपतिप्रसादो भवितेत्याद्याकारमक्षलिङ्गादिव्यापारानपेक्षं मानसज्ञानं तदा साक्षात्करणरूपत्वात् प्रत्यक्षमेव । यत्पुनः प्रियाप्रियप्राप्तिप्रभृतिफलेन सह गृहीतान्यथानुपपत्तिकस्य प्रसादोद्वेगादेर्लिङ्गात् समुत्तिष्ठति तदनुमानमिति सिद्धं प्रत्यक्षपरोक्षलक्षणप्रमाणभेदद्वये सर्वाणि प्रमाणान्यन्तर्गच्छन्ति । अनन्तर्गच्छन्तु नोत्सहिष्णु प्रमाणीभूयावस्थातुमिति । प्रमाणसङ्ख्यानं च स्वपराभिमतमुक्तमस्माभिः ।

तथाहि—

चार्वाको हि समक्षमेकमनुमा-युग् बौद्ध-वैशेषिकौ
साङ्ख्यः शाब्दयुतं द्वयं तदुपमा-युक् चाक्षपादस्त्रयम् ।
सार्थापत्ति चतुष्टयं वदति तद् मानं प्रभाकृत् पुन-
र्भाट्टः सर्वमभावयुक्, जिनमतेऽध्यक्षं परोक्षं द्वयम् ॥१॥

इत्येवं पराभिमतं प्रमाणसङ्ख्यानं सङ्ख्याभासं द्रष्टव्यम् ॥१॥

अथ प्रत्यक्षमात्रं प्रमाणं कक्षीचक्षुषश्चार्वाकान् शिक्षयति-

## अर्थाव्यभिचारात् प्रत्यक्षवदितरप्रमाणसिद्धिः ॥ २ ॥

चार्वाको हि अर्थाव्यभिचारादेव प्रत्यक्षस्य प्रामाण्यमभ्युपेयात्। कथमन्यथा स्नानपानावगाहनाद्यर्थक्रियासामर्थ्यशून्ये मरुमरीचिकानिचयपरिचुम्बिनि जलज्ञाने न प्रामाण्यं ?। तच्चाऽर्थप्रतिबद्धलिङ्गद्वारा समुन्मज्जतोऽनुमानस्याऽपि अर्थाव्यभिचारादेव किं नेष्यते ? । व्यभिचारिणोऽप्यस्योपलम्भाद् प्रामाण्यमिति चेत्, प्रत्यक्षस्यापि तिमिरादिदोषाद् निशीथिनीनाथयुगलावलम्बिनोऽप्रमाणस्य दर्शनात्, सर्वत्राऽप्रामाण्यमासज्येत । प्रत्यक्षाभासं तदिति चेदितरत्रापि समानमन्यत्र पक्षपातात् ।

यत्तु गौणत्वादनुमानमप्रमाणं तदप्यसमीक्षिताभिधानम्, यतो गौणत्वं तत्र गौणार्थविषयत्वप्रयुक्तम्, प्रत्यक्षपूर्वकत्वनिबन्धनं वाऽभिप्रेतम् ? । न तावदाद्यम्, अनुमानस्याऽपि अध्यक्षवद् वास्तवसामान्यविशेषात्मकार्थविषयत्वाभ्युपगमात्। न खलु कल्पितसामान्यार्थगोचरमनुमानमिष्यते सौगतवदार्हतैः। नापि द्वितीयम्, प्रत्यक्षस्यापि कस्यचिदनुमानपूर्वकत्वेन गौणत्वानुषङ्गात्, अनुमानात् साध्यार्थं परिच्छिद्य प्रवृत्तवतः पुंसः तदध्यक्षसमुद्भवात्, तर्कप्रमाणपूर्वकत्वाच्चाऽनुमानस्याऽसिद्धं प्रत्यक्षपूर्वकत्वम्। अपिच तर्कप्रमाणमन्तरेण अनुमानमप्रमाणं गौणत्वादित्यशक्यं वक्तुम्, गौणत्वं हि लिङ्गं नाप्रसिद्धप्रतिबन्धं सदनुमानस्याऽप्रामाण्यं प्रसाधयितुं प्रभवति, अन्यथातिप्रसङ्गात् । प्रतिबन्धप्रसिद्धिश्चाऽनवयवेनाऽभ्युपेया, इतरथा यस्यामेवाऽनुमानव्यक्तौ अप्रामाण्येन गौणत्वस्य सम्बन्धः सिद्धः, तत्रैव गौणत्वं तदनुमापयेद् नान्यत्र तत्र तस्याऽसिद्धत्वात् । न चाऽसौ सा-

कल्येन प्रतिबन्धोऽप्यक्षात् सिद्ध्येत्, तस्य सन्निहितमात्रविषयत्वात्। एवं चाऽनुमानमप्रमाणमिति प्रोचानेन चार्वाकेण तर्कप्रमाणं शरणीकुर्वता अनुमानादेव अनुमानप्रामाण्यं प्रत्याख्यातुं प्रगल्भितमिति स्पष्टं स्वारूढां शाखां परिखण्डयता भौतमन्वकारि ।

किञ्चानुमानमात्रं प्रतिक्षेप्तुमभिप्रेतं चार्वाकेण, अतीन्द्रियार्थाऽनुमानं वा ? । आद्ये सकलव्यवहारसमुच्छेदः, प्रतीयन्ते हि कुतश्चिदविनाभाविनो धूमाद्यर्थाद् वह्न्याद्यर्थान्तरं प्रतियन्तो लौकिका न तु सर्वस्मात्सर्वम्, द्वितीये, कथमतीन्द्रियप्रत्यक्षेतरप्रमाणानामगौणत्वादिना प्रामाण्येतरव्यवस्थितिः । कथं वा परचेतसोऽतीन्द्रियस्य व्यापारविशेषेण प्रतिपत्तिः ॥

तदुक्तमस्माभिः–

“ परस्याभिप्रायं कथमुपलभेताऽनुमितितो
विना तच्चार्वाकाननकमलमुद्रा समजनि ।
न शक्यः प्रत्यक्षात् परहृदयवृत्तेरधिगमो
विशेषाच्चेष्टाया इति यदि तदाऽऽपप्तदनुमा ॥ १ ॥

कथं वाऽधीशीत स्वर्गापवर्गदेवतादि निराकर्तुम्, न चानुपलम्भात्तच्छक्यनिराकारम्, अनुपलम्भमात्रस्याऽभावप्रत्यायनसामर्थ्याऽयोगात्; सतोऽपि वस्तुनः सामग्रीवैकल्येनाऽनुपलम्भभावात्, अन्यथा गृहाद् बहिर्गतश्चार्वाको वराको न पुनर्निवर्त्तेत, प्रत्युत पुत्रदारधनाद्यभावाऽवधारणात् सोरस्ताडं शोकविकलो विक्रोशेत्। स्मरणान्नैवमिति चेद्। न, तस्याऽभावपरिच्छेदाविरोधात्; प्रत्यावृत्तोऽपि कथं पुनरासादयिष्यति, सत्त्वादिति चेत्, अनुपलम्भकालेऽपि तर्हि सन्तीति न तावन्मात्रेणाभावावधारणं स्यात् । तदैव समुत्पन्ना इति चेन्मैवमनुपलम्भेन हेतूनां बाधात्; अबाधे वा स एव दोषः। अत एव प्रत्यक्षमपि न स्यात् तद्धेतूनां चक्षुरादीनामनुपलम्भबाधितत्वात् । उपलभ्यन्त एव

गोलकादय इति चेन्न तदुपलब्धेः पूर्वं तेषामनुपलम्भात्, न च यौगपद्यनियमः कार्यकारणभावादिति नाऽयोग्यानुपलम्भोऽभावप्रत्ययं जनयितुमलम्, अयोग्यानुपलम्भाश्च स्वर्गादय इति न तन्मात्रेण शक्या निराकर्तुम्; योग्यानुपलम्भस्तु तत्र नास्तीति सर्वैकमत्यं नातस्तत्प्रयुक्तस्तदभावः सिद्धिसौधमध्यारोढुमर्हति। एवमपि चाऽनुमानमेव शरणीकरणीयं स्यादिति नानुमानप्रमाणमनातिष्ठमानश्चार्वाक आसीत क्षेमेणेति ॥ २ ॥

अथाऽभावप्रामाण्यं भाट्टाभिमतमपाकर्त्तुमाह–

## उक्तग्राह्योऽभावः ॥ ३ ॥

प्रत्यक्षपरोक्षलक्षणं द्विविधं प्रमाणमुक्तम्, तेन ग्राह्यः परिच्छेद्योऽभावः, अभावविषयपरिच्छित्त्यै उक्तातिरिक्तमभावप्रमाणं नास्तीति भावः, तथाहि भूतलादि वस्तु घटादिप्रतियोगिना संसृष्टं प्रत्यक्षेण ग्रहीतव्यं भवति, असंसृष्टं वा ?। आद्ये, प्रतियोग्यभावग्राहकत्वेनाऽभावप्रमाणस्य प्रवृत्तिविरोधः, प्रवृत्तौ वाऽप्रामाण्यं प्रतियोगिनः सद्भावेऽपि तत्प्रवर्तनात्। द्वितीयपक्षे, तु वैयर्थ्यमभावप्रमाणस्य, प्रत्यक्षेणैव प्रतियोगिनोऽभावप्रतीतिसिद्धेः। अथ न संसृष्टं नाप्यसंसृष्टं प्रतियोगिना भूतलादि प्रत्यक्षग्राह्यम्, वस्तुमात्रस्य प्रत्यक्षग्राह्यत्वाङ्गीकारादिति चेन्। मैवम्, संसृष्टत्वासंसृष्टत्वयोः परस्परपरिहारस्थितिरूपत्वेन एकप्रतिषेधे अपरविधेरावश्यकत्वात्, तस्माद् भावाभावात्मकवस्तुग्रहणप्रवणेन प्रत्यक्षेणैवाऽभावप्रत्ययः समुत्थास्नुः।

क्वचित्तु तद्धटं भूतलमिति स्मरणेन, तदेवेदं घटशून्यं भूतलमिति प्रत्यभिज्ञानेन, यो नास्त्यग्निमान् नाऽसौ भवति धूमवानिति तर्केण, नात्र धूमो धूमध्वजाभावादित्यनुमानेन, गृहे नास्ति देवदत्त इति शब्देन चाऽभावः परिच्छिन्नो भवति, नातो निर्विषयत्वादभावः प्रमाणपदवीमलमलङ्कर्तुम्। अपि चाऽयं प्रमाणपञ्चक-

निवृत्तिरूपत्वेन निरुपाख्यत्वात् कथमधीशीत प्रमेयाभावं परिच्छेत्तुम्?। न च प्रमाणपञ्चकाभावः प्रमेयाभावगोचरप्रत्ययं प्रादुष्कुर्वन् उपचारादभावप्रमाणमुच्यते; इति सम्यगभिधानम्, सर्वथा भावार्थान्तरस्याभावस्याऽवस्तुतया तज्ज्ञानजनकत्वायोगात्, वस्तुन एव कार्योत्पादसामर्थ्यात्; न ह्यवस्तु सकलसामर्थ्यविकलत्वात् शशविषाणवत् कार्योत्पादसमर्थम्, सामर्थ्ये तु भावस्वरूपत्वानुषङ्गः । न च यत्र प्रमाणपञ्चकाभावस्तत्राऽवश्यं प्रमेयाभावज्ञानमुदेति, परचेतोवृत्तिविशेषैर्व्यभिचारात्। किञ्च प्रमाणपञ्चकविरहो ज्ञातो वा तज्ज्ञाननिपुणः, अज्ञातो वा?। आद्ये, कुतो ज्ञप्तिः?, तद्विषयप्रमाणपञ्चकाभावादिति चेद्, दुस्तराऽनवस्थातरङ्गिणी, प्रमेयाऽभावाच्चेदितरेतराश्रयावतारः। अज्ञातश्चेद्, न सम्भवति तस्य ज्ञापकत्वम् "नाऽज्ञातं ज्ञापकं नाम" इत्युक्तेः, अन्यथाऽतिप्रसङ्गात् ॥

अक्षादेस्त्वज्ञातत्वेऽपि कारकत्वाद् ज्ञानहेतुत्वाऽविरोधः। न चाऽयमपि तथेति युक्तं निखिलसामर्थ्यशून्यत्वेनाऽस्य कारकत्वाऽयोगात् । एतेन

"सात्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि"

इति कुमारिलवचोऽप्यशोभम्, यत आत्मनोऽपरिणामः, सर्वथा ज्ञाननिर्मुक्त आत्मा, कथञ्चिद् वा?। आद्ये, माता मे वन्ध्या, निरन्तरमहं मौनीत्यादिवत्स्ववचनविरोधः । सर्वथा ज्ञाननिर्मुक्तत्वे ह्यात्मनः कथमभावपरिच्छेदो लब्धोदयः?। परिच्छेदे वा कथं ज्ञाननिर्मुक्तभावस्तस्य सर्वथा सम्भवति?। अथ कथञ्चित्, तथाहि निषेध्यगोचरं ज्ञानमस्य नास्ति, अभावविषयं त्वस्ति; एवं तर्हि तज्ज्ञानमेवाऽभावप्रमाणं स्यान्नात्मा, तच्च भावान्तरस्वभावाभावग्राहकतयेन्द्रियजनितत्वात् प्रत्यक्षमेव । अन्यवस्तुविषयकज्ञानं तु प्रत्यक्षमेव, निषेधनीयघटादेरतिरिक्तस्य हि भूतलादेर्ज्ञानमभावप्रमाणाख्यां प्रतिपद्यमानं स्वात्मकाभावपरिच्छेदकं त्विष्ट-

मेव। एतेन

"न तावदिन्द्रियेणैषा नास्तीत्युत्पाद्यते मतिः।
भावांशेनैव संबन्धो योग्यत्वादिन्द्रियस्य हि" ॥१॥
इति श्लोकवार्त्तिकं निरस्तम्।

यत्तु—"मेयो यद्वदभावो हि मानमप्येवमिष्यताम्।
भावात्मके यथा मेये नाभावस्य प्रमाणता" ॥ १ ॥

इत्युक्तं भट्टेन तदप्यसारम्, भावरूपेण प्रत्यक्षेण नाऽभावो वेद्यते इति प्रतिज्ञायाश्चित्रभानुरनुष्ण इतिवद् अन्यासंसृष्ट-भूतलग्राहिणा प्रत्यक्षेण बाधितत्वात्, गगनतले पत्रादीनामधः-पाताभावेन वायुप्रत्ययसमुत्पादात्, भावादनलादेः शीताभाव-प्रतीतेः, सर्वानुभवसिद्धत्वात्। न चायं नियमो यो यथाविधो विषयः स तथाविधेनैव प्रमाणेन परिच्छिन्नो भवति, यथा रूपादिभावो भावरूपेण प्रत्यक्षेणेति, अभावस्य मुद्गरादि-हेतुत्वाभावप्रसङ्गात्; शक्यं हि वक्तुं यो यथाविधः स तथा-विधेनैव क्रियते, यथा घटादिभावो मृत्पिण्डादिना, अभावश्च घट-प्रध्वंसस्तस्मादभावेनैव असौ कर्त्तव्यो भवतीति। प्रत्यक्षबाधस्तु अन्यत्रापि तुल्य एवेति नास्ति कथञ्चिद्भावांशादभिन्नमभावां-शं परिच्छिन्दत् प्रत्यक्षादिव्यतिरिक्तमभावविषयमभावप्रमा-णमिति।

यदाऽऽचक्ष्महि—

"देदीप्यते सदसदात्मकवस्तुबोधे-
ऽध्यक्षादिकं किमवशिष्यत आद्रियध्वे ?।
यस्मिन्नभावमितितामयि ! चिन्तयध्वं
नास्ति स्वतन्त्रपदवीं पुनरेष बिभ्रत्" ॥ १ ॥ ३ ॥

अथ प्रत्यक्षं लक्षयति—

## साक्षात्करणं प्रत्यक्षम् ॥ ४ ॥

अत्र प्रत्यक्षं लक्ष्यम्, साक्षात्करणत्वं तस्य लक्षणम्।

प्रमाणसामान्यस्वरूपं यथार्थज्ञानं साक्षात्करणं चेत् तत्प्रत्यक्षमित्यर्थः, सामान्यलक्षणानुवादेन विशेषलक्षणविधानात्, तथाच प्रत्यक्षं साक्षात्करणयथार्थज्ञानं भवति प्रत्यक्षतायास्तथैवोपपत्तेः। असाक्षात्करणं हि अनुमानादिज्ञानं न प्रत्यक्षमिति साक्षात्करणयथार्थज्ञानस्यैव प्रत्यक्षत्वसिद्धिः । ननु साक्षात्करणमिति कोऽर्थ इति ? । उच्यते, साक्षात्करोति अयं नीलः, सुरभिर्गन्धः, मृदुलः स्पर्शः, तारः शब्दः, मधुरो रस इत्येवमनुमानाद्यतिरेकेण इदंरूपतया परिच्छिनत्ति विषयमनेनेति साक्षात्करणं तथाभूतं ज्ञानं प्रत्यक्षमित्यर्थः; साक्षात्करोमीतिसार्वलौकिकानुभवसिद्धज्ञानत्वव्याप्यजातिमत्त्वं वा प्रत्यक्षत्वम् । प्रभुपादाः श्रीहेमसूरयस्तु "विशदं प्रत्यक्षम्" इति प्रत्यक्षं लक्षयित्वा प्रमाणान्तरानपेक्षत्वं वैशद्यमित्यपि परिचस्कुः । इह च प्रत्यक्षलक्षणशून्यं तद्वदाभासमानं प्रत्यक्षाभासं तच्चाभिधास्यमानपारमार्थिकसांव्यवहारिकरूपप्रत्यक्षविशेषाभासोदाहरणैरेवोदाहृतमवसेयम् ॥ ४ ॥

इदानीं पारमार्थिक-सांव्यवहारिकभेदेन द्विविधस्य प्रत्यक्षस्य आद्यं पारमार्थिकस्वरूपं प्रकाशयति—

## आत्ममात्राऽपेक्षं पारमार्थिकम् ॥ ५ ॥

प्रत्यक्षमिति वर्त्तते, इन्द्रियाऽनिन्द्रियपरिहारेण आत्ममात्रस्य अपेक्षा यस्योत्पत्तौ तदात्ममात्रापेक्षम्, परमार्थे भवं पारमार्थिकं क्षय-क्षयोपशमविशेषशालिनं ह्यात्मानमेवाऽपेक्ष्यैतदुदयः । पारमार्थिकप्रत्यक्षस्वरूपविहीनस्तद्वदाभासमानः पारमार्थिकप्रत्यक्षाभासः, उदाहरणमग्रे द्रष्टव्यम् ॥ ५ ॥

पारमार्थिकप्रत्यक्षभेदानाह—

## केवल-मनःपर्याया-ऽवधयस्तद्विधयः ॥ ६ ॥

तस्य पारमार्थिकप्रत्यक्षस्य विधयः प्रकाराः, केवलज्ञानम्,

मनःपर्यायज्ञानम्, अवधिज्ञानं चेति त्रयः ॥ ६ ॥

तत्र केवलज्ञानस्य स्वरूपमाविष्करोति-

**योगाद् घातिकर्मप्रक्षये सर्वद्रव्य-पर्यायगोचरं केवलम् ॥ ७ ॥**

योगः सम्यग्दर्शन-ज्ञान-चारित्राणि तस्य दीर्घकालनिरन्तरसत्काराऽऽसेवितस्य प्रकर्षपर्यन्ते ध्यानविशेषेण ज्ञानावरण-दर्शनावरण-मोहनीया-ऽन्तरायरूपाणां चतुर्णामात्मनो मूलस्वरूपहननाद् घातिशब्देन व्यपदेश्यानां कर्मणां प्रकर्षेण सर्वथा क्षये ध्वंसे सति सर्वाणि द्रव्याणि पर्यायाश्च गोचरत्वेन विषयतया सन्ति अस्मिन्निति इन्द्रियादिसाहायकविरहात्, सकलवस्तुविषयत्वात्, असाधारणत्वाच्च केवलाभिधानेनाभिधेयं ज्ञानमाविर्भवति ।

यदाहुः श्रीजिनभद्रगणि-क्षमाश्रमणपूज्यपादाः—

"अह सव्वदव्वपरिणामभावविन्नत्तिकारणमणंतं ।
सासयमप्पडिवाई एगविहं केवलन्नाणं" ॥ १ ॥ इति

न चासङ्गतो ज्ञानावरणाद्यभ्रपटलापगमे केवलप्रकाशस्वभावस्याऽऽत्मनो लोकालोकावगाहनस्वभावप्रकाशप्रसरः, न चासम्भवं प्रकाशस्वभावस्याप्यात्मनः चन्द्रार्कादे रजोऽभ्रपटलादिभिरिव ज्ञानावरणादिकर्मभिरावरणम्। नानुपपन्नश्च वलवता ध्यानविशेषेण वायुनेवामीषां प्रलयः, नायुक्तश्चानादेरपि कर्मणः स्वर्णमलस्य क्षारमृत्पुटपाकादिनेव प्रतिपक्षभूतयोगविशिष्टाभ्यासेन परिक्षयः । न्याय्यं च अमूर्तस्याप्यात्मनोऽमूर्त्तायाश्चेतनाशक्तेर्मदिरादिनेव कर्मभिरावरणमिति ।

ननु लोकालोकावभासिना तादृशज्ञानेन सर्वज्ञतायां किं प्रमाणम् ?। मानाधीना हि मेयसिद्धिः, मानानपेक्षवस्त्वभ्युपगमे गगनकुसुम-कूर्मरोम-नरविषाणादेरप्यभ्युपगमप्रसङ्गः ॥ ७ ॥

न च प्रकृते प्रमाणं किञ्चित्प्रतिभातीत्यत आह–

**प्रमेयत्वादेर्बाधकाभावाच्च तस्य सिद्धिः ॥८॥**

तस्य केवलज्ञानस्य सिद्धिः, असमासस्तत्पदस्योत्तरत्रानुवृत्त्यर्थम्, सूक्ष्मान्तरितदूरार्थाः कस्यचित् प्रत्यक्षाः प्रमेयत्वाद्, घटवत्, इत्याद्यनुमानं तादृशकेवलज्ञानसाधनधीरम्। न हि सामान्यप्रमितिविषयता प्रत्यक्षप्रमाविषयत्वं व्यभिचरति, दृश्यते हि अनुमागोचरो धूमध्वजादिः कस्यचिदध्यक्षगोचरस्तथैवानुमादिप्रमाविषयत्वं परमाण्वाद्यतीन्द्रियभावेषु कस्यचित् प्रत्यक्षविषयतामपि साधयेदिति किमुन्न्यायम् ।

आदिपदात्, आकाशादौ परिमाणातिशयेनेव प्रज्ञाया अतिशयेनापि क्वचिदवश्यं भवनीयं विश्रान्तिमता, यत्र च निरतिशयप्रज्ञासिद्धिः स एव सर्वज्ञ इत्यादिप्रमाणान्यभ्यूह्यानि । यदुक्तमस्माभिः–

"सर्वज्ञं प्रतिषेधयन् क्व भगवन्! मीमांसको धावितः
स्यादेवातिशयो धियः परिमितेराकाशवद् विश्रमी ।
सामान्यप्रमितेः पुनर्विषयता प्रत्यक्षधीगोचरी-
भावस्याऽव्यभिचारिणीति सकलज्ञस्योपपत्तावपि" ॥१॥

अथ प्रेनापि बाधकेन तादृशज्ञानप्रतिक्षेपः काङ्क्षितः प्रेक्षादक्षेण सोऽपि नेत्याह "बाधकाभावात्" इति । ननु किमत्र बाधकमभिप्रेतं प्रत्यक्षं वा, अनुमानं वा, आगमो वा ?। आद्ये, सांव्यवहारिकं वा पारमार्थिकं वा ?। पारमार्थिकमपि अवधिर्वा मनःपर्यायो वा केवलं वा ?। नाद्यौ, तयोः क्रमेण रूपिमनोगोचरत्वेन तस्य बाधायामधीरत्वात्, केवलस्य बाधकत्वे तु केवलमेव प्रत्यपीपदत्। सांव्यवहारिकमपि मानसमैन्द्रियकं वा ?। नाद्यम्, तस्य सुखादिमात्रविषयत्वात् । द्वितीये तु इदानीमत्र तद् बाधेत सर्वत्र सर्वदा वा ?। आद्ये न नो विवादः । द्वितीयेऽपि सर्वदेशकालानाकलय्य तद्

बाधेत, इतरथा वा? । आद्ये स्ववचसैव सर्वज्ञतासिद्धिः; द्वितीये न हि सम्भवति सकलदेशकालाकलनविकलस्य तस्य तादृशज्ञानाभावप्रत्यायनपाटिमा। अपिच संविदामिन्द्रियागोचरत्वात्, ऐन्द्रियमध्यक्षं सकलप्रत्यक्षस्य विधौ निषेधे वा मूकमेव वराकमिति ।

नाप्यनुमानं तद्बाधकं धर्मिग्राहकप्रमाणाभावेऽनुमानाऽप्रवृत्तेः, धर्मिग्राहकप्रमाणसद्भावे तु तेनैव तस्य बाधकस्य बाधितत्वात् कुतो बाधकानुमानोत्थानसम्भवः? । अथ विवादाध्यासितः पुमान् सर्वज्ञो भवितुं नार्हति वक्तृत्वात्, पुरुषत्वाद् वा रथ्यापुरुषवदित्यनुमानेन सर्वज्ञतां निराचिकीर्षेः? । तदप्यसत्, प्रमाणपरिदृष्टार्थवक्तृत्वस्य तत्र हेतूकारे तादृशवक्तृत्वस्य सर्वज्ञ एव भावेन हेतोर्विरोधाघ्रातत्वात्, असद्भूतार्थवक्तृत्वस्य हेतूकृतौ सिद्धसाध्यतानुषङ्गात्, वक्तृत्वसामान्यस्य हेतूचिकीर्षायां सन्दिग्धविपक्षव्यावृत्तिकत्वेन हेतोरनैकान्तिकत्वात् । एवं पुरुषत्वमपि रागाद्यदूषितं हेतूकृतं तदा विरोधः, विपरीतं चेत् सिद्धसाधनम्, पुरुषत्वसामान्यं तु पूर्वोक्तवदनैकान्तिकम् ।

आगमोऽपि यदि सर्वज्ञप्रणीतस्तदा कुतः स्वाश्रयभञ्जकः?। विपरीतस्त्वप्रमाणमेव, अपौरुषेयं तु वचनं सम्भवत्येव न। यत्तूक्तं चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं स्थूलं व्यवहितं विप्रकृष्टमेवंजातीयकमर्थमवगमयितुं शक्नोति, नाऽन्यत् किञ्चनेन्द्रियमिति। चोदना चापौरुषेयत्वेन पुरुषगतानां दोषाणामप्रवेशात् प्रमाणमेव ।

यदाह—

"शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितम् ।
तदभावः क्वचित्तावद् गुणवद्वक्तृकत्वतः ॥ १ ॥
तद्गुणैरपकृष्टानां शब्दे सङ्क्रान्त्यसम्भवात् ।

यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ २ ॥
दोषाः सन्ति न सन्तीति पौरुषेयेषु चिन्त्यते ।
वेदे कर्त्तुरभावात्तु दोषाशङ्कैव नास्ति नः" ॥३॥ इति

तत्तुच्छम्—अपौरुषेयवचनासम्भवात्, उच्यते, स्थानकरणाभिघातपूर्वकं पुरुषेण प्रतिपाद्यते इति हि वचनं तत्कथमपौरुषेयं भवति, तदिदं परस्परं व्याहतमपौरुषेयं च वचनं चेति । न चामूर्त्तस्य सतोऽपि अदर्शनं नाऽयुक्तमिति युक्तं प्रमाणाभावात्, अभिव्यञ्जकवशात् शब्दश्रवणमेव प्रमाणमिति चेन्। मैवम्, जन्यत्वेऽप्युपपत्तेः, एकशब्दाभिव्यक्त्यै स्थानकरणाभिघाते इतरेषामपि तद्देश्यानां तेषामभिव्यक्तिप्रसक्तेश्च । न च शब्दानां प्रतिनियतव्यञ्जकव्यङ्ग्यता शक्या वक्तुं व्यङ्ग्यान्तरेषु तथाप्रत्ययाऽभावात् ।

"गृहे दधिघटीं द्रष्टुमाहितो गृहमेधिना ।
अपूपानपि तद्देश्यान् प्रकाशयति दीपकः" ॥ १ ॥

इति पुनरनुभवात्, यदाह मुनिकणादः— "अभिव्यक्तौ दोषात्" इति । किञ्च शब्दो यदि व्यङ्ग्यो भवेद् न तर्हि चैत्रो वक्तीत्येवमावृतोऽपि चैत्रस्तथाभूतेन शब्देन अनुमितः स्यात्, न हि भवति प्रदीपादिर्व्यञ्जको घटादिव्यङ्ग्येनाऽनुमागोचरः । इति युक्तिरिक्तमेव वचनस्याऽपौरुषेयत्वम् ।

अपिच, प्रमायाः ज्ञानसामान्यहेत्वतिरिक्तहेत्वधीनत्वेन वेदेऽपि गुणाश्रयः कश्चित्पुरुषविशेषोऽवश्यं माननीयः, न चासिद्धं ज्ञानहेत्वतिरिक्तहेत्वधीनत्वम्, ज्ञानविशेषत्वादिहेतुना अप्रमावत्, प्रमायामपि तत्सिद्धेः, यदि च ज्ञानसामान्यहेतुमात्राधीना प्रमा स्यात्, अप्रमापि प्रमा स्यात् अस्ति हि तत्र ज्ञानसामान्यसामग्री अन्यथा ज्ञानत्वमेव जह्यात्; तथा च शाब्दप्रमायामपि तादृशगुणाश्रयः कश्चित्पुरुषः सिद्धिसौधमारोहति । न च शब्दे विप्रलिप्साद्यभावे वक्तृगुणापेक्षा नास्तीति युक्तं वक्तुं गुणाभावे तदप्रामाण्यस्य वक्तृदो-

षापेक्षा नास्तीत्यपि सुवचत्वात्, अप्रामाण्यं प्रति दोषाणामन्वयव्यतिरेकौ भवत इति चेत् ? । न, प्रामाण्यं प्रत्यपि गुणानां तयोः सत्त्वात्, ननु पौरुषेयविषये इयं भवतु व्यवस्था, अपौरुषेये तु दोषनिवृत्त्यैव प्रामाण्यमिति चेद्, न । गुणनिवृत्त्याऽप्रामाण्यस्याऽपि सम्भवात्, तस्या अप्रामाण्यं प्रति, सामर्थ्यं नोपलब्धमिति चेद्, दोषनिवृत्तेः । प्रामाण्यं प्रति सामर्थ्यं क्वोपलब्धमित्युच्यताम् ?, लोकवचसीति चेत्, समानं तदप्रामाण्ये दोषा एव कारणं गुणनिवृत्तिस्तु अवर्जनीयसिद्धसन्निधिरिति चेत्, प्रामाण्यं प्रत्यपि गुणेषु तुल्यमेतद्, गुणानां दोषोत्सारणप्रयुक्तः सन्निधिरिति चेद्, दोषाणामपि गुणोत्सारणप्रयुक्त इत्यस्तु । निःस्वभावत्वमेवमपौरुषेयवेदस्य स्यादिति चेदात्मानमुपालभस्वेति वचनमात्रं पौरुषेयमेव कक्षीकर्त्तव्यं तथैव सर्वेषामनुभवसिद्धेरिति कृतमधिकेन । इति साधकप्रमाणसद्भावाद् बाधकानवकाशाच्चाऽव्याहतप्रसरा सर्वज्ञसिद्धिरिति । उक्तत्रिश्लोकी तु गुणपदस्थाने दोषपदं दोषपदस्थाने च गुणपदं प्रक्षिप्योचितपाठा ।

न चानुपलम्भमात्रस्य सर्वज्ञाभावसाधकत्वम्; तस्य प्रागेव प्रतिक्षेपाद्, योग्यानुपलम्भस्तु प्रकृते नास्ति नातस्ततस्तदभावसिद्धिः, सर्वज्ञज्ञानस्य चातीन्द्रियत्वात्; नाऽशुच्यादिदर्शन तद्रसास्वादनदूषणसमवतारः । अतीते काले चाऽतीतं यथा-ऽवर्त्तिष्ट, भविष्यति च यथा भविष्यति, वर्त्तते च यथा वर्त्तमाने तथैव त्रैकालिकार्थानां युगपदधिगमो भवति सर्वविदः, नानुपपन्नः खलु सामान्येन स्वभ्यस्तसकलशास्त्रार्थस्येव अशेषविशेषकलितसर्ववस्तूनां युगपत्प्रतिभास इति सामान्यतः सर्वज्ञसिद्धावपि अर्हन्नेव सर्वज्ञपदवीमलङ्कर्तुमलं निर्दोषत्वात् । न चाऽयम सिद्धः प्रमाणाऽविरोधिवाक्त्वेन तस्य सिद्धेः । न चेदमनुपपन्नं तदभिमतानेकान्ततत्त्वस्य प्रमाणेनाऽबाधात् ।

तदुक्तम्—

"सत्यमेवासि निर्दोषो युक्ति-शास्त्राऽविरोधिवाक्।
अविरोधो यदिष्टं ते प्रसिद्धेन न बाध्यते ॥ १ ॥
त्वन्मतामृतबाह्यानां सर्वथैकान्तवादिनाम्।
आप्ताभिमानदग्धानां स्वेष्टं दृष्टेन बाध्यते" ॥ २ ॥

इतरे तु आगमा न्यायशृङ्खलाविकलत्वात् पूर्वापरविरोधदुर्गन्धत्वात्, लोकविरुद्धहिंसादिदुष्टकर्मोपदेशाच्चाऽऽगमाभासा एवेति सुतरां तत्प्रणेतारः क्षुद्रबुद्धय इति स्पष्टं प्रेक्षारूपाणां चेतसि जागृयात्।

यदाह कलिकालसर्वज्ञो भगवान् श्रीहेमचन्द्रः—

"हिंसाद्यसत्कर्मपथो-पदेशादसर्वविन्मूलतया प्रवृत्तेः।
नृशंसदुर्बुद्धिपरिग्रहाच्च ब्रूमस्त्वदन्यागममप्रमाणम्" ॥१॥

श्रुति-स्मृतीतिहास-पुराणेष्वपि तीर्थान्तराधिपानां चरित्रस्य पृथग्जनेभ्योऽपि कुत्सापदरूपेणोपलम्भात्, सर्वज्ञसम्पदासम्पन्नत्वाभिमानस्तत्र विना महामोहविलसितं किमन्यद्धेतुको वक्तव्यः॥

अनेन च सृष्टेरन्यथानुपपत्त्या परमेश्वरं प्रसाधयतां परेषां सुव्यक्त एव प्रतिभाप्रमादः। न हि परमेश्वरोऽपि जगन्निर्मातुं कुलालवद् व्यापिपर्त्ति, निष्प्रयोजनत्वात्। प्रयोजनवतो हि सम्भवति प्रवृत्तिः, कृतकृत्यस्य निर्दोषस्य अनन्तज्ञानाऽम्भोधौ रममाणस्य वीतरागस्य परमेश्वरस्य किं परिशिष्यते, यदर्थं जगन्निर्माणे प्रवर्त्तेत?। अथ कारुण्येन जगत्सृष्टिरित्यभिप्रायः सोऽपि न यौक्तिकः, परदुःखप्रहाणेच्छा हि कारुण्यम्, ततः सर्गात्प्राग् जीवानामिन्द्रियविषयशरीरानुत्पत्तौ स्वतः सिद्धे दुःखाभावे कस्य प्रहाणेच्छा नाम कारुण्यं संघटेत?। सर्गोत्तरकाले दुःखिनः प्राणिनः समवलोक्य कारुण्याभ्युपगमे तु परस्पराश्रयावतारः—कारुण्येन हि सृष्टिः सृष्टितश्च कारुण्यमिति स्वार्थकारुण्याभ्यां

व्याप्तत्वात् प्रेक्षप्रवृत्तेः, तदेकतरस्यापि चेश्वरेऽसम्भवात् व्यापकानुपलम्भेन जगत्स्रष्टिर्नोपपद्यते महेशितुः।

यदाहुः परमेश्वरं स्तुवन्तः श्रीहेमचन्द्रप्रभुपादाः–

"अदेहस्य जगत्सर्गे प्रवृत्तिरपि नोचिता।
न च प्रयोजनं किञ्चित् स्वातन्त्र्यान्न पराज्ञया ॥ १ ॥
क्रीडया चेत्प्रवर्तेत रागवान् स्यात् कुमारवत्।
कृपयाऽथ सृजेत्तर्हि सुख्येव सकलं सृजेत् ॥ २ ॥
दुःख-दौर्गत्य-दुर्योनिजन्मादिक्लेशविह्वलम्।
जनं तु सृजतस्तस्य कृपालोः का कृपालुता ? ॥ ३ ॥
कर्मापेक्षः स चेत् तर्हि न स्वतन्त्रोऽस्मदादिवत्।
कर्मजन्ये च वैचित्र्ये किमनेन शिखण्डिना ? ॥ ४ ॥
अथ स्वभावतो वृत्तिरवितर्क्या महेशितुः।
परीक्षकाणां तर्ह्येष परीक्षाक्षेपडिण्डिमः ॥ ५ ॥
सर्वभावेषु कर्तृत्वं ज्ञातृत्वं यदि संमतम्।
मतं नः सन्ति सर्वज्ञा मुक्ताः कायभृतोऽपि हि" ॥ ६ ॥ इति

"ईश्वरः प्रेरकत्वेन कर्त्ता कैश्चिदिहेष्यते।
अचिन्त्यचिच्छक्तियुक्तोऽनादिसिद्धश्च सूरिभिः ॥ १ ॥
ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः।
ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥ २ ॥
अज्ञो जन्तुरनीशोऽयमात्मनः सुख-दुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ ३ ॥
अन्ये त्वभिदधत्यत्र वीतरागस्य भावतः।
इत्थं प्रयोजनाऽभावात् कर्तृत्वं युज्यते कथम् ? ॥ ४ ॥
नरकादिफले कांश्चित् कांश्चित् स्वर्गादिसाधने।
कर्मणि प्रेरयत्याशु स जन्तून्केन हेतुना ? ॥ ५ ॥
स्वयमेव प्रवर्त्तन्ते सत्त्वाश्चेत् चित्रकर्मणि।
निरर्थकामहेशस्य कर्तृत्वं गीयते कथम् ? ॥ ६ ॥

फलं ददाति चेत् सर्वं तत्तेनेह प्रचोदितम् ।
अफले पूर्वदोषः स्यात् सफले भक्तिमात्रता ॥ ७ ॥
आदिसर्गेऽपि नो हेतुः कृतकृत्यस्य विद्यते ।
प्रतिज्ञातविरोधित्वात् स्वभावोऽप्यप्रमाणकः ॥ ८ ॥
कर्मादेस्तत्स्वभावत्वे न किञ्चिद् बाध्यते विभोः ।
विभोस्तु तत्स्वभावत्वे कृतकृत्यत्वबाधनम् ॥ ९ ॥
ततश्चेश्वरकर्तृत्ववादोऽयं युज्यते परम् ।
सम्यग्न्यायाऽविरोधेन यथाहुः शुद्धबुद्धयः ॥ १० ॥
ईश्वरः परमात्मैव तदुक्तव्रतसेवनात् ।
यतो मुक्तिस्ततस्तस्याः कर्त्ता स्याद् गुणभावतः ॥ ११ ॥
तदनासेवनादेव यत्संसारोऽपि तत्त्वतः ।
तेन तस्यापि कर्तृत्वं कल्प्यमानं न दुष्यति ॥ १२ ॥
कर्त्ताऽयमिति तद्वाक्ये यतः केषाञ्चिदादरः ।
अतस्तदानुगुण्येन तस्य कर्तृत्वदेशना ॥ १३ ॥
परमैश्वर्ययुक्तत्वाद् मत आत्मैव वेश्वरः ।
स च कर्त्तेति निर्दोषः कर्तृवादो व्यवस्थितः" ॥ १४ ॥

इति श्रीमद्भगवद्धरिभद्रसूरिपूज्यपादवदनारविन्दनिर्गलद्वचनमकरन्दसन्दर्भः ।

एतेन भू-भूधरादिकं बुद्धिमत्कर्तृकं कार्यत्वाद् घटादिवदित्यनुमानं परकीयं व्याप्त्यसिद्धिविरोधादिदोषाघ्राततयाऽनादरणीयम्, नित्यमुक्तात्मेश्वरः प्रतिक्षिप्तश्च, प्रयोगश्च-न नित्यमुक्तो भवितुमर्हतीश्वरो मुक्तत्वाद्, अन्यमुक्तवदिति । बन्धापेक्षया च मुक्तव्यपदेशः, तद्रहिते तु नासौ सम्भवति गगनवत्, इत्यर्हन्नेव तादृशनिरतिशयप्रज्ञामलङ्करिष्णुः परमेश्वरपदवीमदीधरत्तस्मात् ।

"ध्यातव्योऽयमुपास्योऽयमर्थं शरणमिष्यताम् ।
अस्यैव प्रतिपत्तव्यं शासनं चेतनाऽस्ति चेत्" ॥१॥ इति ॥८॥

ननु प्रतिपद्यामहे तादृशनिरतिशयज्ञानसुभगमर्हत्परमेश्वरम्। औदारिकशरीरं बिभ्राणोऽप्यसौ कवलाहारे व्याप्रियेतेति पुनः का वाचोयुक्तिः?। न ह्यनन्तवीर्यस्य कृतकृत्यस्य भगवतः कवलाहारे किञ्चित्प्रयोजनं पश्यामः। न च निष्प्रयोजना प्रवृत्तिः सङ्गच्छते प्रेक्षावताम्; न चाहारादाननिदानषट्कमध्ये एकस्याऽपि भगवति सम्भवसम्भावना; न चासति कारणे कार्योत्पादोऽतिप्रसङ्गात्; न चाहारानादाने प्राणवृत्तिर्न सम्भवति भगवतः, अनपवर्त्यायुष्ट्वात्, अनन्तवीर्यत्वाच्च, अनेन संयमादेरपि आहारकारणकत्वाभिधानं मन्दमेव, सर्वज्ञोऽपि कृतकृत्योऽपि भगवानाहारमाहारयतीति महत्कुतूहलमित्यभिप्रेयुषो नग्नाटान् प्रबोधयितुमाह—

## अविरोधी कवलाहारः ॥ ९ ॥

तस्येति वर्त्तते उत्तरत्र च तस्य केवलज्ञानस्य अविरोधी कवलाहारः, न हि केवलज्ञानेन केवलाहारो विरोधमाविभर्त्ति येन केवलज्ञानसद्भावदशायामौदारिकशरीरभृतोऽपि भगवतः कवलाहारप्रतिषेधो न्याय्यः स्यात्, तथाहि— साक्षात् कवलाहारः केवलज्ञानेन विरोधमाविभर्त्ति; स्वव्यापकादिविरोधद्वारा वा?। न तावदाद्यः, न ह्यस्ति सम्भवः कवलप्राप्तिर्न भवेत् केवलिनः, प्राप्तानपि वा कवलान् न पारयेदाहर्तुम्, समर्थोऽपि वा नाहरेत् केवलपलायनद्वारेणेति, अन्तराय-केवलावरणयोः समूलं भगवता निर्मूलितत्वात्। नापि द्वितीयः, कवलाहारव्यापकव्याघातासम्भवात्, तद्व्यापकं हि शक्तिविशेषवशत उदरकन्दराकोणे क्षेपस्तस्य च केवलसद्भावेऽपि नासम्भवसम्भावना, वीर्यान्तरायकर्मणः परिक्षीणत्वात्, तत्र तत्क्षेपहेतोः शक्तिविशेषस्य सम्भवात्।

कारणव्याघातोऽपि न वक्तव्यः कारणं हि बाह्यं वा व्या-

हन्येत आन्तरं वा ? । बाह्यमपि भोजनीयं वस्तु तदुपकरणं-पात्रादि औदारिकशरीरं वा ? । न प्रथमं यदि हि केवलज्ञानेन कवलनीयपुद्गला विरोधमादधीरन् तदा अस्मदादिज्ञानेनापि ते न विरुध्येरन्निति का प्रत्याशा ? । न हि भवति तरुणतरणिकिरणनिकरेण ध्वान्तपटलं विरोधं बिभ्राणं प्रदीपालोकेनापि तथा न भवेदिति । न द्वितीयम्, तीर्थेश्वराणां हि पाणी एव पात्रम् । अन्येषां सामान्यकेवलिनां तु स्वरूपमात्रेण पात्रादिकं विरोधि, ममकारादिद्वारा वा ?। प्रथमस्तु, पूर्वयुक्त्या प्रत्युक्त एव । ममकारस्तु निर्मोहत्वेन तेषां सम्भवत्येव न । नच पात्रादिसद्भावे ममकाराऽवश्यम्भाव इति वाच्यम् ?, शरीरभावेऽपि तद्भावप्रसङ्गात् । औदारिकशरीरं तु विरोधमाविष्कुर्वाणं केवलोत्पत्तिसमनन्तरमेव नामावशेषंस्यात् ।

आन्तरमपि कारणं शरीरं वा कर्म वा ? । तत्र, तैजसं शरीरं तु भुक्तिकारणं न विरोधधारणधीरं, तस्य भवद्भिरपि तदानीं तेषामुपगमात् । कर्मापि घाति, अघाति वा ?। आद्येऽपि, ज्ञानदर्शनावरणे वाऽन्तरायो वा मोहरूपं वा?। न तावदाद्यो विकल्पः सुन्दरः, न हि ते ज्ञानदर्शनावरणमात्रेण चरितार्थे कवलाहारकारणत्वेन शकनीये वक्तुम् । न द्वितीयः प्रत्युतान्तरायविरह एव कवलादनकारणम्, अन्तरायविरहे च तत्र भवतामपि न वैमत्यम् ।

मोहोऽपि बुभुक्षालक्षणः, सामान्येन वा ?। प्रथमे, सर्वत्राप्यसौ कारणमस्मदादावेव वा ?। नाद्यः, न हीच्छापूर्विका सर्वा क्रिया सम्भवतीत्यस्ति नियमः । नन्वेष दर्शयामि प्रमाणं, या या चेतनक्रिया सा सा इच्छापूर्विका, यथा सम्प्रतिपन्ना तथा च केवलिनि भुजिक्रिया तस्मात्सापीच्छापूर्विका, भवति हि प्रथमं जानाति तत इच्छति अनन्तरं यतते ततः करोतीति सार्वलौकिकोऽनुभवः ?। एतदसारम्, सुप्त-प्रमत्त-मूर्च्छितादिक्रियाभिर्व्यभिचारात् । स्ववशचेतनक्रियाया इच्छापूर्वकत्वनियमाङ्गीका-

रोऽपि केवलिगतगति-स्थितिप्रभृतिक्रियाणां निरीहत्वपूर्वकत्वेन भवतामप्यभिमतत्वात् स्ववचसैवोत्थितपतितः। अस्मदादाविति विकल्पे तु सिद्धसाध्यताः स्मः। सामान्येन मोहस्य कारणत्वे गति-स्थित्यादिष्वपि तस्य कारणत्वं वक्तव्यम्, एवं च तीर्थेश्वराणां तीर्थप्रवृत्तिः कुतः स्यात्?, इति चिन्तनीयम्, मोहाद्यभावेन तेषां गमनादिक्रियानुपपत्तेः। अथ तत्र गत्यादिकर्मैव कारणम्, हन्त! तर्हि कवलाहारेपि वेदनीयादिकर्मैव कारणं न मोह इति किमन्यायाव्यम्, तस्य भवद्भिरपि तत्र स्वीकारात्। न च स्वीकृतमपि तत्तत्र दग्धरज्जुस्थानिकमिति न कार्यानुगुणमिति शक्यं वक्तुम्, आगमाभावात्; आगमेऽत्यन्तसातोदयस्य केवलिनि प्रतिपादनात्; युक्तिरपि, यदि घातिकर्मक्षयात् केवलज्ञानादिकमुदियात्, एतावता वेदनीयाद्युद्भवायाः क्षुधः किमायातं येनाऽसौ नाऽऽविःस्यात्?, सातासातयोरन्तर्मुहूर्त्तपरिवर्त्तमानतया सातोदयवद् असातोदयोऽपि भगवत्यस्त्येव, इति सत्यपि अनन्तवीर्यत्वे भवत्येव क्षुदुद्भवपीडादि, परिनिष्ठितार्थः पुनर्भगवानदः कथं वृथा सहेतेति प्रेक्षणीयम्।

अपि च औदारिकशरीरस्थितिः कथं कवलाहारमन्तरेण केवलिनः सम्भवति?, अनन्तवीर्यत्वेन तं विनापि तदुपपादने छद्मस्थावस्थायामपि कवलाहारो न करणीयः स्यात् तदानीमपि अनन्तवीर्यत्वचकासनात् "एकादश जिने" इति च वाचकमुख्यपादा अपि सूत्रयामासिवांसः। क्षुत्पिपासादीनेकादश परीषहान् भगवति केवलिनि अभ्युपजग्मुः, वेदनीयस्य दग्धरज्जुस्थानिकत्वे कथमेषोऽभ्युपगमश्चतुरस्रः स्यादिति चिन्त्यम्।

यत्तु—

"तेषां तत्रोपचारेण प्रतिपादनात्— उपचारनिमित्तं च वेदनीयसद्भावमात्रम्" इति जजल्प प्रभाचन्द्रः। तन्मिथ्या; मुख्यार्थबाधाऽभावे उपचारस्याऽसम्भवात्। यत्तु अनन्तसुखा-

ऽनुपपत्तिं कवलाहारे दोषमाहुः, न हि क्षुदुद्भवपीडाव्यतिरेकेण कवलाहारः, न च सत्याममुष्याममुपपत्तिमत्यनन्तसुखश्रीरिति, तदप्यसारम्; अनन्तसुखवत्त्वे प्रमाणाभावात्, महावीरपरमेशितुर्गोशालनिर्मुक्ततेजोलेश्याप्रभवानुतापलेशानुभवस्य स्पष्टमागमे प्रकटनात्; स्वाभिनिविष्टार्थप्रतिकूलागमस्य अप्रामाण्यस्वीकारेऽतिप्रसङ्गात्; युक्तिपरिचुम्बितनिर्बाधाभ्युपगमे त्विट्टूषां पक्षपातात्, ज्ञानादिगुणसङ्गतं त्वनन्तसुखं भगवति भासत एव, यदाहुर्महातार्किकश्रीयशोविजयगणयः—

"अनन्तं च सुखं भर्तुर्ज्ञानादिगुणसङ्गतम् ।
क्षुधादयो न बाधन्ते पूर्णे त्वस्ति महोदये" ॥१॥ इति

यत्तु भवोपग्राहिणां कर्मणां केवलिनि दग्धरज्जुकल्पत्वाभिधानमावश्यकवृत्त्यादौ श्रूयते तत्तु स्थितिशेषाद्यपेक्षमवगमनीयं न तु रसापेक्षया, अपरथा सूत्रकृद्वृत्तिविरोधप्रसङ्गात्, असातादिप्रकृतीनामसुखदत्वाभिधानमप्यावश्यकनिर्युक्त्यादौ घातिकर्मोद्भवबहुतरासुखविलयेनाल्पस्याऽविवक्षणात्, इतरथा भवोपग्रहानुपपत्तेः । यदाबभाषाणास्त एव—

"दग्धरज्जुसमत्वं च वेदनीयस्य कर्मणः ।
वदन्तो नैव जानन्ति सिद्धान्तार्थव्यवस्थितिम् ॥ १ ॥
पुण्यप्रकृतितीव्रत्वादसाताद्यनुपक्षयात् ।
स्थितिशेषाद्यपेक्षं वा तद्वचो व्यवतिष्ठते" ॥ २ ॥ इति

एतेन चाऽघातीति विकल्पोऽपि निरस्तो द्रष्टव्यः, तथाहि—किमघातिकर्म नामकर्मभेदः, आहारपर्याप्तिः, उत वेदनीयम्? । न द्वयमप्येतत् प्रत्येकं तथायुक्तं तथाभूताहारपर्याप्तिनामकर्मोदये हि वेदनीयोदयप्रबलज्वलदौदर्यानलपरितप्यमानः पुमान् आहारमाद्रियत इति द्वयमप्येतत् समुदितं तत्र कारणम्, किन्तु

केवलज्ञानेन सह न विरोधमाधत्ते केवलिनि भवद्भिरपि तदुरीकारात्। न च मोहसहकृतं तत् तत्र कारणं, गत्यादि-कर्मणामिवाऽमुष्याऽपि मोहसाहायकरहितस्यैव तत्र तत्साधकत्वात्; इति न केवलिनि केवलेन किञ्चित् कारणं व्याहतमस्ति, नापि तत्कार्यम्। न च कवलाहारे रसनेन्द्रियोद्भवं मतिज्ञानं विरुध्यते, तावन्मात्रेण तदभावात्; इतरथा सुरविसर-निरन्तरपरिमुक्तकुसुमपरिमलादिसम्बन्धाद् घ्राणेन्द्रियज्ञानमपि प्रकटीस्यात्।

न च ध्यानविघ्नोऽपि सम्भवति अन्यथा गमनादिपरिणामभावेऽपि तदापत्तेः। न च परोपकारप्रतिबन्धः, तृतीययाममुहूर्त्त एव तेषां भुक्तेः स्वीकारात् शेषमशेषकालं तत्सम्भवात्। न च विसूचिकादिव्याध्युदयः, परिज्ञाय हितमिताहाराभ्यवहारात्। न च जुगुप्सितं पुरीषादिकर्म स्यादिति वक्तव्यम्?। एतावता हि क्षुत्क्षामकुक्षीभवनीयमिति कैमो न्यायः?। यो हि यस्य स्वभावः, असावमुमाविष्कुर्यादेव, न च केवलेन तद्विरोधसिद्धिः।

किञ्च जुगुप्सापि कस्य समापद्येतेति वक्तव्यम्?, न तावद् भगवतस्तस्य निर्मोहत्वात्। अथान्येषाम्, एवं तु सुरासुरेन्द्रसमाकुलायां परिषदि भगवतो नाग्न्यपरिदर्शनेनाप्यसौ तेषां दुर्वारा। सातिशयत्वाद्भगवतो न कोऽपि तन्नाग्न्यं परिद्रष्टुमर्धीष्टे इति चेत् पुरीषादिकर्मण्यपि तथैव प्रतिपत्तव्यम्। तदुक्तम्–

"आहारनीहारविधिस्त्वदृश्यश्चत्वार एतेऽतिशयाः सहोत्थाः"।

इति; सामान्यकेवलिनां तु विविक्तप्रदेशे तद्विधानाद् न दोषः। मोहनीयसमुत्थे तु निद्रा–रिरंसे मोहनीयं प्रक्षीणवतो भगवतः कुतः सम्भवतः?। नातः कार्यव्याघातोऽपि कश्चित्सावकाशः।

न चाऽनन्तवीर्यवतोऽल्पीयसी क्षुदकिञ्चित्करेति मतं सम्यक् प्रमाणाऽभावात्, लोके स्पष्टं व्यभिचारदर्शनात्। न चैवंविधमेव वपुर्भगवतो यत्क्षुत्पीडया बाधितं न भवति,

क्षुत्पीडया पीडितं भवति भगवद्वपुर्वपुष्ट्वाद् अस्मदादिवपुर्वत्; इति प्रतिपक्षानुमानेन प्रतिक्षेपात्ः इत्थंचाहारनिदानषट्कमध्ये एकतमस्याप्यसिद्धत्वोद्भावनमपाकृतम्, पर्याप्तिवेदनीयोदयाहारपाकनिमित्ततैजसशरीरादिकवलाहारसामग्रीसद्भावस्य प्रागेव प्रतिपादनात्, अत एव निष्प्रयोजनत्वप्रयुक्तः प्रतिषेधोऽपि कवलाहारस्य प्रतिषिद्ध एवेति साधकप्रमाणसद्भावाद् बाधकानवकाशाच्च समुपपन्नः कवलाहारः केवलिनामिति ।

उक्तं चाऽस्माभिः—

"भुक्तिं केवलिनः समाकलयतोऽप्यौदारिकं भूघनं
सत्त्वे वेदनकर्मतैजसवपुःपर्याप्तिहेतोरपि ।
न्यासेधन् यदि वेद्यकर्म निगदेद् निर्दग्धरज्जुस्थिती-
त्येतन्नागमिकं भवेदितरथा कस्माद् भवोपग्रहः?" ॥१॥९॥

अथ केवलज्ञानस्याऽधिकारित्वं व्यनक्ति—

## अधिकारिणौ पुंस्त्रियौ ॥ १० ॥

तस्य केवलज्ञानस्याऽधिकारिणौ पुमान् स्त्री च, उभयत्रापि तत्साधकसामग्रीसद्भावसम्भवात् ।

"इक्को वि नमुक्कारो जिणवरवसहस्स वद्धमाणस्स ।
संसारसागराओ तारेइ नरं वा नारीं वा" ॥ १ ॥

इत्यागमेनाऽपि पुरुषतुल्यकक्षतया स्त्रियः केवलज्ञानाधिकारित्वप्रतिपादनात् । न चायमागमो भवदीयोऽस्मान् प्रत्यप्रमाणं भवतो यज्ञानुष्ठानाऽऽगमवदिति सुभाषितम् । अप्रामाण्यप्रसाधकन्यायाऽभावात् । यत्तु " अयं हि तावन्नियमोऽस्ति यद्वेदस्य मोक्षहेतुपरमप्रकर्षः, तद्वेदस्य सप्तमपृथ्वीगमनकारणाऽपुण्यप्रकर्षोऽप्यस्त्येवेत्यूचे प्रभाचन्द्रः, तद्बालविलसितम् । एवंविधाऽविनाभावस्य प्रमाणाऽपरिस्पर्शित्वात्; इतरथा यद्वेदस्य सप्तमपृथिवीगमनकारणाऽपुण्यप्रकर्षस्तद्वेदस्य मोक्षहेतुपरमप्रकर्ष इत्ये-

वमपि नियमस्याऽभ्युपगमप्रसङ्गात् । नपुंसकादिमोक्षप्राप्तेर्बाधकत्वे त्वन्यत्राऽपि समान एव स्त्रीजनमोक्षाभावप्रसङ्गो बाधकः । न चासाविष्ट एव अन्यत्राऽपि तथाप्रसङ्गात् ।

वयं त्वेकतरमप्यनयोर्नियमं नाङ्गीकुर्मः, स्वाभिनिवेशितार्थाऽनुगुणनियममङ्गीचक्रुषो भवतः प्रति पुनर्विपरीतार्थानुकूलनियममापादयामः, बाधकत्वमबाधकत्वं च न्यायमार्गानुविधायि, न्यायपरिचुम्बितो ह्यर्थोऽनुपपद्यमानो बाधको भवति, तत्र च नपुंसकादिमोक्षप्राप्त्यभावस्य न्याय्यत्वमुभयत्राप्यविवादादनुपयुक्तपरामर्शम्, तदनुपपत्तिश्च ततो भवत्येव बाधावहा । स्त्रीजनमोक्षानुपपत्त्यापि तदानीमेव बाधिकया भवितव्यं यदा स्त्रीजनमोक्ष उपपत्तिपदवीं न्यायमहाराजप्रसत्तित आविशेत्, एवं चैष एव साम्प्रतं युक्तचिन्तनः, तथाहि— स्त्रियस्तावत् केवलज्ञानं परब्रह्ममहोदयो वा सम्यग्दर्शनादिसामाग्र्यभावेन, विशिष्टसामर्थ्याऽसत्त्वेन, पुरुषानभिवन्दनीयत्वेन, अमहर्द्धिकत्वेन, मायाप्रकर्षवत्त्वेन वाऽसम्भविष्णुरिति । न तावदाद्यः, वक्तव्यं हि किन्निबन्धनस्तासां तदभावः ?, चीवरपरिग्रहवत्त्वेन चारित्राभावादिति चेत्, अत्रापि प्रष्टव्य आचक्षीताऽऽयुष्मान् परिग्रहत्वं चीवरस्य किन्निबन्धनम् ?, शरीरसम्पर्कमात्रेण परिभुज्यमानत्वेन, मूर्च्छाहेतुत्वेन वा ? । प्रथमे क्षित्यादिनाऽपि शरीरसम्पर्केण परिग्रहित्वं न स्यादिति का प्रत्याशा ? । द्वितीये परिभुज्यमानत्वमभूषामशक्यत्यागतया वा गुरूपदेशाद्वा ? । न तावदाद्यः पक्षः, सम्प्रत्यपि हि प्राणानपि संत्यजन्त्यो याः परिदृश्यन्ते तासामैकान्तिकाऽऽत्यन्तिकाऽऽनन्दसम्पदार्थिनीनां बाह्यचीवरं प्रति का नामाऽशक्यत्यागता ? । द्वितीयपक्षोऽपि मन्द एव, यतो विश्वजनीनेन विश्वगुरुणा सर्वविदा भगवता मुमुक्षुपक्ष्मलाक्षीणां यदेव संयमोपकारि तदेव चीवरोपकरणं "नो कप्पदि निग्गंथीए अचेलाए होत्तए" इत्यादिनोपादेशि प्रतिलेखन-कमण्डलुप्रमुखवत्;

इति कथं तस्य परिभोगात्परिग्रहरूपता ?। अन्यथा प्रतिलखेनादिधर्मोपकरणस्याऽपि तत्प्रसङ्गात् । संयमपरिपालनार्थत्वं तूभयत्राऽपि समानम् । तृतीयविकल्पोऽपि प्रतिलेखनादितुल्यकक्षतया वस्त्रस्य परिग्रहरूपत्वं प्रसाधयति, मूर्च्छाशून्यस्य तु संयमप्रतिपालनार्थं प्रतिलेखनादिवदाऽऽत्तेन चीवरेणापि न काचित्क्षतिः ।

यत्तु– "बुद्धिपूर्वकं हि हस्तेन पतितवस्त्रमादाय परिदधानोऽपि तन्मूर्च्छारहित इति कश्चेतनः श्रद्दधीत, तन्वीमाश्लिष्यतोऽपि तद्रहितत्वप्रसङ्गात्" इति बभाषे प्रभाचन्द्रः, । तदसारम्, प्रतिलेखनादावपि हि सर्वमेतत् सुवचं भवति । बुद्धिपूर्वकं चामुकस्थानमागच्छतः पूर्वस्थानं परिजहतः केवलिनोऽपि मूर्च्छावत्त्वप्रसङ्गः । अवोचाम च पूर्वसूत्रे सर्वा क्रिया मूर्च्छापूर्विकैव भवतीति नियमप्रतिभङ्गम्, नातः सम्यग्दर्शनादिसामग्र्यभावेन तासां मोक्षोऽनुपपत्तिमान् । विशिष्टसामर्थ्यासत्त्वमपि सप्तमपृथिवीगमनाऽभावेन स्वीक्रियमाणं मोक्षप्राप्तिप्रसाधकत्वेन यद्यभिप्रेतं तथासति मोक्षगमनाभावेन स्वीक्रियमाणं तत् सप्तमपृथ्वीगमनाभावमभव्यानां किं न प्रसाधयेत् ?। यत्त्वाह प्रभाचन्द्रः–स्त्रीणां संयमो न मोक्षहेतुः, नियमेनर्द्धिविशेषाहेतुत्वान्यथानुपपत्तेः, यत्र हि संयमः सांसारिकलब्धीनामप्यहेतुस्तत्रासौ कथं निःशेषकर्मविप्रमोक्षलक्षणमोक्षहेतुः स्यादित्यादि, तदपि प्रमत्तगीतम्, माषतुषादीनां तदभावेऽपि मोक्षहेतुविशिष्टसंयमोपलब्धेः । न च लब्धीनां संयमहेतुकत्वमागमिकं कर्मोदय-क्षय-क्षयोपशमो-पशमहेतुकतया तासामागमे प्रतिपादनात् ।

तथाहि–

"उदयखयखयोवसमोवसमसमुत्था बहुप्पगाराओ ।
एवं परिणामवसा लद्धीओ हवन्ति जीवाणं" ॥१॥ इति

अपि च सर्वासां लब्धीनामभावोऽभिधीयते स्त्रीषु, क्वा-

साश्चिद्वा नियतानाम्? नाद्यः, चक्रवर्त्यादिलब्धीनां कासाश्चिदेव तासु प्रतिषेधात्, आमर्षौषध्यादीनां तु भूयसीनामपि भावात्। द्वितीये तु व्यभिचारः, पुरुषाणां सर्ववादादिलब्ध्यभावेऽपि विशिष्टसामर्थ्यस्वीकारादकेशवानामेवातीर्थकरचक्रवर्त्यादीनामपि च मोक्षसम्भवात्। पुरुषानभिवन्दनीयत्वमपि न मोक्षप्रतिकूलम्, तीर्थकरजनन्यादीनां पुरन्दरनरेन्द्रादिभिरपि प्रणतानां मोक्षसम्भवात्; अपि च शिष्या अप्याचार्यैर्नाभिवन्द्यन्ते इति तेऽपि निर्वृतिसम्पदं नासादयेयुः। अमहर्द्धिकत्वेनेत्यप्यसुन्दरम्, स्त्रीणामाध्यात्मिकसम्यग्दर्शनादिसमृद्धिसद्भावात्; बाह्यायास्तु तीर्थकरत्वसम्पदो गणधरादीनां चक्रवर्तित्वादिसम्पदश्चेतरक्षत्रियाणामभावेन तेषामपि मोक्षानुपपत्तेः। अथ याऽसौ पुरुषवर्गस्य महती समृद्धिस्तीर्थकरत्वलक्षणा सा नास्ति तास्वित्यमहर्द्धिकत्वं तत्र नाऽसिद्धमित्याकूतम्। तदपि न, स्त्रीणामपि परमपुण्यपात्रभूतानां कासाञ्चित्तीर्थकरत्वाऽविरोधात् तद्विरोधसाधकप्रमाणाऽभावात्, एतस्यैवाऽर्थस्याऽद्यापि विवादाऽऽस्पदत्वात्। मायादिप्रकर्षस्तु नारदादिष्वप्यविशिष्ट एव। न चामी मोक्षानर्हा इति स्त्रियोऽपि कथं तथा भवेयुरितः पुरुषेभ्यो हीनत्वाद् नपुंसकवत् स्त्रीणां न सम्भवति मोक्ष इत्याद्यपि नियमप्रणाली स्त्रीणां मोक्षाभावप्रसाधनधीरिमाणमादधाति। तदेवं साधकप्रमाणसद्भावाद् बाधकानुपलम्भाच्च नास्ति स्त्रीणां मोक्ष इति वचनं साहसातिरेकं सूचयति।

एवं च भवदीय उक्तनियमः स्त्रीजनमोक्षलक्षणप्रामाणिकाऽर्थप्रतिरोधित्वेनाऽनुपादेय एव; न हीष्यते लोहलेख्यत्वपार्थिवत्वयोः साहचर्यनियमः प्रमाणपक्षपातिविद्वत्परिषदा, पार्थिवस्य वज्रस्य लोहलेख्यत्वबाधात्, एवं प्रकृतेऽपि स्त्रीणां मोक्षाभावबाधाद् नासौ नियमः समीचीनः। इतरथाऽस्मदापादितविपरीतनियमस्याऽपि युक्त एव स्यादभ्युपगमः श्रीमताम्,

नपुंसकादिमोक्षबाधत्वात्मानमुपालभेध्वमिति ॥

यदवदाम—

"स्त्रियो मुक्ता न स्युर्गमनविकलाः सप्तमभुवा-
मिति प्रोचानानां भवति विपरीतो न नियमः ?।
तथा चाऽभव्यादेरपि तदनुषङ्गः सुदुरसो-
ऽनुमानं सिद्धान्तोऽपि च तदमृते खल्वभिमुखः" ॥१॥१०॥

निरूपितं केवलज्ञानम्, इदानीं मनःपर्याया-ऽवधी दर्शयति—

## क्षायोपशमिकौ मनःपर्यायावधी ॥११॥

वीर्यान्तरायक्षयोपशमसहकृतेन स्वस्वावरणक्षयोपशमेन मनःपर्यायस्याऽवधेश्च समुत्पत्तिर्भवति। ननु क्षायोपशमिकत्वस्य लक्षणत्वेनेष्टत्वे मतिश्रुतज्ञानयोरपि तत्सद्भावादतिप्रसङ्ग इति चेत् ?। न, पारिमार्थिकत्वविशिष्टक्षायोपशमिकत्वस्य तत्राऽभावात्, तयोरिन्द्रियानिन्द्रियनिमित्तोत्पादत्वेन उक्तलक्षणपारमार्थिकत्वस्य विरहात्। अत्र मनःपर्यायज्ञानस्य संयमविशुद्धिप्रभवत्वाद् न विपर्ययः। एवं घातिकर्मप्रलयसमुत्थत्वात् केवलज्ञानस्यापि। अवधिज्ञानाभासं तु भवति यथा शिवनाम्नो राजर्षेरसङ्ख्यातद्वीपसमुद्रेषु सप्तद्वीपसमुद्रज्ञानम्, विभङ्गज्ञानमप्यस्य नामान्तरमेवेति। नन्वनयोः कः प्रतिविशेषः ?। उच्यते, विशुद्धिकृतः क्षेत्रकृतः स्वामिकृतो विषयकृतश्चानयोर्भेदः। तत्र विशुद्धिकृतो यथा— अवधिज्ञानाद् विशुद्धतरं मनःपर्यायज्ञानम्; यावन्ति खलु रूपाणि द्रव्याणि अवधिज्ञानी जानीते; तानि विशुद्धतराणि मनोगतानि मनःपर्यायज्ञानी जानाति। क्षेत्रकृतो यथा अवधिज्ञानमङ्गुलस्याऽसङ्ख्येयभागादिषूत्पन्नं भवति आसर्वलोकाद्, मनःपर्यायज्ञानं तु मनुष्यक्षेत्र एव; स्वामिकृतो यथा अवधिज्ञानं संयमिनोऽसंयमिनो वा भवति, मनःपर्यायज्ञानं पुनः संयमिन एव। तथाच मनुष्याणामेव संयमाधिकारात् त एव तदधिकारिणः;

अवधिस्तु देवनारकमानुषतिरश्चां चतुर्णामपि संभवति, तत्र चाद्यद्वयस्य भवप्रत्ययः पक्षिणामिव वियद्गमनम्; चरमद्वयस्य च गुणप्रत्ययः। विषयकृतो यथा रूपिद्रव्येष्वसर्वपर्यायेषु अवधिज्ञानस्य, तदनन्तभागे पुनर्मनःपर्यायस्याऽवकाश इति ॥११॥

पारमार्थिकप्रत्यक्षं लक्षयित्वा सभेदं निरूप्य च सांव्यवहारिकप्रत्यक्षं सलक्षणनिर्देशं भेदयति–

## इन्द्रियानिन्द्रियनिमित्तमवग्रहे-हावायधारणाभेदं सांव्यवहारिकम्॥ १२॥

इन्द्रियाणि स्पर्शनादीनि वक्ष्यमाणानि तानि निमित्ततयाऽस्येतीन्द्रियनिमित्तम्, तथा अनिन्द्रियं वक्ष्यमाणं मनस्तन्निमित्तमस्येत्यनिन्द्रियनिमित्तमिति द्विविधं सांव्यवहारिकप्रत्यक्षम्। ननु इन्द्रियज्ञाने मनोऽपि व्यापिपर्त्तीति कथं नाऽमुना व्यपदेशः?। उच्यते, इन्द्रियस्याऽसाधारणकारणत्वाद्, मनः पुनरनिन्द्रियज्ञानेऽपि व्याप्रियते इति साधारणं तद्, व्यपदेशश्चाऽसाधारणेन भवति, दृश्यते हि पयःपवनातपादिजन्यत्वेऽपि अङ्कुरस्य बीजेनैव व्यपदेशः शाल्यङ्कुरः, कोद्रवाङ्कुरोऽयमिति। ननु सांव्यवहारिकमिति कः पदार्थः?। उच्यते, समीचीनो व्यवहारः संव्यवहारः, बाधारहितप्रवृत्तिनिवृत्ती इत्यर्थः, ते प्रयोजनमस्येति सांव्यवहारिकम्। वस्तुतस्तु इन्द्रियाऽनिन्द्रियनिबन्धनज्ञानं परोक्षमेव, परनिमित्तत्वाद् अनुमानवत्। न चायमसिद्धो हेतुरिन्द्रियाऽनिन्द्रिये हि पौद्गलिकत्वाद् मूर्त्ते; आत्मा तु अमूर्तोऽमूर्त्ताच्चाऽतिरिक्तं मूर्त्तमिति आत्मनः परभूते इन्द्रियानिन्द्रिये, ततश्च ततः समुपजायमानं ज्ञानं परोक्षमेव यथा धूमादिलिङ्गद्वारेण समुत्तिष्ठद् धूमध्वजादिविगाह्यनुमानम् "आद्ये परोक्षम्" इति सूत्रयामासुषा भगवता वाचकमुख्यमहर्षिणाऽपि मति-श्रुतज्ञानयोः परोक्षत्वमेव प्राकाशि इन्द्रियाऽनिन्द्रियनिमित्ते च मति-श्रुतज्ञाने, न

हि ताभ्यामन्यदिन्द्रियाऽनिन्द्रियनिबन्धनं ज्ञानमस्ति तदाहुः श्रीजिनभद्रगणिक्षमाश्रमणपूज्यपादाः-

"अक्खस्स पोग्गलकया जं दव्विन्दियमणा परा तेणं ।
तेहिं तो जं नाणं परोक्खमिह तमणुमाणं व ॥ १ ॥
इन्दिय-मणोनिमित्तं परोक्खमिह संसयादिभावाओ ।
तक्कारणं परोक्खं जहेह साभासमणुमाणं ॥ २ ॥
होन्ति परोक्खाइं मइ-सुआइं जीवस्स परनिमित्ताओ ।
पुव्वोवलद्धसंबंधसरणाओ वाणुमाणं व" ॥ ३ ॥

यत्तु इन्द्रियाऽनिन्द्रियानपेक्षमात्ममात्रसान्निध्यमपेक्ष्यसमुत्पद्यते ज्ञानं तद् वास्तवं प्रत्यक्षं यथाऽवधि-मनःपर्याय-केवलज्ञानानीति निर्बाधप्रवृत्तिनिवृत्तिरूपसंव्यवहारप्रयोजनकत्वेनोपचारतस्तत्र प्रत्यक्षत्वमवधेयम्, अत एवास्य सांव्यवहारिकसंज्ञा । अस्य प्रकारानाह- अवग्रहेत्यादि अवग्रहः, ईहा, अवायः, धारणा चेति एतेषां स्वरूपं स्वयं वक्ष्यते सूत्रकार इति ।

ननु अर्थालोकावपि चक्षुर्ज्ञाने कारणत्वेन कैश्चिदिष्येते तदुक्तम्-

"रूपालोकमनस्कारचक्षुर्भ्यः संप्रजायते ।
विज्ञानं मणि-सूर्यांशु-गोशकृद्भ्य इवाऽनलः" ॥ १ ॥ इति ।

तत्कथमत्र नोक्तौ? । उच्यते व्यभिचारित्वेन तयोः कारणत्वानर्हत्वात् । न ह्यर्थालोकौ ज्ञानस्य साक्षात्कारणीभवितुमर्हतः, मरुमरीचिकादौ जलाभावेऽपि जलज्ञानस्य, वृषदंशादीनामालोकाभावेऽपि मुष्टिग्राह्यतमःपटलप्रदेशस्थवस्तुप्रतिपत्तेश्च दर्शनात्; इति नास्ति ज्ञानस्य अर्थालोकापेक्षानियमः, यश्च यं नियमेनापेक्षते स्वोत्पत्तौ असौ तस्य कारणं भवति यथा दण्डः कलशस्य, न चापेक्षते नियमेन ज्ञानमुक्तरीत्याऽर्थालोकौ इति न तत् तत्कारणकम् ।

किञ्च योगिभिरतीताऽनागताऽर्थग्रहणेऽर्थस्य निमित्तत्वं कुतः

सम्भवति ?। निमित्तत्वे ह्यर्थक्रियाकारित्वेन तस्यातीतानागतत्वं भज्येत । न च प्रकाशनीयादर्थादात्मलाभ एव ज्ञानस्य प्रकाशकत्वं न्याय्यं, प्रकाश्यादर्थादात्मानमलब्धवतोऽपि दीपकस्य तत्प्रकाशकत्वभावात् । कथं चेश्वरज्ञानस्य नित्यत्वेन स्वीकृतस्याऽर्थजन्यत्व सम्भवः ?। अस्मदादीनां जनकस्यैव ग्राह्यत्वाङ्गीकारे स्मृत्यादेरप्रामाण्यप्रसङ्गस्तस्यार्थजन्यत्वाभावात् । न च स्मृतिरप्रमाणमेव, तस्या अनुमानप्रमाणप्राणभूतत्वात्; साध्यसाधनस्मरणपूर्वकं ह्यनुमानम्, वक्ष्यते च पुरस्तादाधिकमत्रत्यमिति ।

ये तु सौगता एकान्तक्षणिकमर्थं ज्ञानस्य जनकत्वेनोपयन्ति, तन्मते ज्ञानमेव तावद् दुरुत्पदम्, का कथा तज्जनकस्याऽर्थक्षणस्य ग्राह्यत्वे?। तथाहि– ज्ञानसहभाविनोऽर्थक्षणस्य ज्ञानोत्पादकत्वं न सम्भवति, युगपद् भाविनोः कार्यकारणभावाभावात्। नाऽपि प्राचीनक्षणस्य, तस्य विलीनत्वेन तदुत्पादासम्भवात् । अपि च कारणीभूतार्थक्षणस्य विलये ज्ञानस्य निर्विषयत्वानुषङ्गः, कारणस्यैव तन्मत्या विषयत्वात् तस्य च विलीनत्वाद्, निर्विषयं च ज्ञानमप्रमाणमेव आकाशकेशज्ञानवत्, इति नार्थक्षणादुत्पन्नत्वमुत्पादकस्य च ग्राहकत्वं ज्ञानस्योपपत्तिपदवीमारोहति। किञ्च जनकस्यैव ग्राह्यत्वे इन्द्रियाणामपि तत्प्रसङ्गः, स्वसंवेदनस्य ग्राहकत्वानुपपत्तिश्च तस्य हि स्वरूपमेव ग्राह्यम्, न च तेन तदुत्पादः, स्वात्मनि क्रियाविरोधात्, तस्मात् स्वसामग्रीप्रभवयोर्घटप्रदीपयोरिवाऽर्थज्ञानयोः प्रकाश्यप्रकाशकभावसम्भवान्न ज्ञानकारणमर्थ इति ।

नन्वर्थाऽजन्यत्वे ज्ञानस्य प्रतिनियतकर्मव्यवस्था कथं स्यात् ?; तदुत्पत्ति तदाकारताभ्यां हि तदुपपत्तिस्तस्मादनुत्पन्नस्याऽतदाकारस्य च ज्ञानस्य सर्वार्थान् प्रत्यविशेषात्; सर्वार्थग्रहणमापद्येतेति चेत् ?। नैवम्, तदुत्पत्तिमन्तरेणाऽपि आवरणक्षयोपश-

मलक्षणया योग्यतयैव प्रतिनियतार्थप्रकाशकत्वसिद्धेः, तदुत्पत्तावपि च योग्यताऽवश्यमेषितव्या । इतरथाऽशेषार्थसान्निध्येऽपि कुतश्चिदेवार्थात् कस्यचिदेव ज्ञानस्य जन्मेति कौतस्कुतो विभागः ? । तदाकारतात्वर्थाकारसङ्क्रान्त्या तावदनुपपन्ना, अर्थस्य निराकारत्वप्रसक्तेः, ज्ञानस्य साकारत्वापत्तेश्च । अर्थेन च मूर्त्तेनाऽमूर्त्तस्य ज्ञानस्य कीदृशं सादृश्यमित्यर्थविशेषग्रहणपरिणाम एव साभ्युपेया । अपिच, तदुत्पत्तितदाकारते व्यस्ते वा ग्रहणकारणीभवेतां समस्ते वा ?। आद्ये कपालाद्यक्षणो घटान्त्यक्षणस्य ग्राहकः स्यात्, तस्मात्तदुत्पत्तेः । जलचन्द्रो वा नभश्चन्द्रस्य ग्राहकः स्यात्, तस्य तदाकारत्वात् । अथ समस्ते तर्हि घटोत्तरक्षणः पूर्वघटक्षणस्य ग्राहकः स्यात्, उभयोरप्यनयोस्तत्र सद्भावात्, अथ ज्ञानरूपत्वे सति ते ग्रहणकारणतयाऽभीष्येते इति मतम् । तदपि न, समानजातीयज्ञानस्य समनन्तरज्ञानग्राहकत्वप्रसङ्गात्, तयोर्जन्यजनकभावसद्भावात् । तस्मान्न योग्यतामन्तरेणाऽन्यद् ग्रहणकारणं पश्याम इति । सांव्यवहारिकप्रत्यक्षवदाभासमानं सांव्यवहारिकप्रत्यक्षाभासं, यथा अम्बुधरेषु गन्धर्वनगरज्ञानं; दुःखे सुखज्ञानं च, अत्राद्यमैन्द्रियकप्रत्यक्षाभासस्य अन्त्यं मानसप्रत्यक्षाभासस्योदाहरणमिति ॥ १२ ॥

इन्द्रियाणीत्युक्तं तत्र कानीन्द्रियाणि ? अत्राह—

## स्पर्शन-रसन-घ्राण-चक्षुः-श्रोत्राणीन्द्रियाणि ॥ १३ ॥

स्पृशत्यनेनेति स्पर्शनं स्पर्शं गृह्णाति, रसयत्यनेनेति रसनं रसं गृह्णाति, जिघ्रत्यनेनेति घ्राणं गन्धं गृह्णाति, चष्टेऽनेनेति चक्षुः रूपं गृह्णाति, शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णाति, "इदु समृद्धौ" इतीन्दति लोकोत्तरसमृद्धिमान् भवतीतीन्द्र आत्मा तस्य लिङ्गमितीन्द्रियम्, एवमिन्द्रदृष्टमिन्द्रजुष्टमिन्द्रदिष्टमिन्द्रसृष्टमित्यादयो-

ऽपि व्युत्पत्तिप्रकारा ऊहनीयाः। इन्द्रियं च द्वेधा– द्रव्येन्द्रियं भावेन्द्रियं च, तत्र द्रव्येन्द्रियं विशिष्टबाह्याभ्यन्तरसंस्थानविशेषवन्तः पुद्गलाः, तथाहि– श्रोत्रादिषु यः कर्णशष्कुल्यादिप्रभृतिर्बाह्यः पुद्गलानां प्रचयो यश्चाऽऽभ्यन्तरः कदम्बगोलकाद्याकारः स सर्वोऽप्रधानेन्द्रियत्वाद् द्रव्येन्द्रियमुच्यते, अप्राधान्यं च व्यापारवत्यपि तस्मिन् सन्निहितेऽपि चालोकप्रभृतिसहकारिनिकुरम्बे भावेन्द्रियव्यतिरेकेण स्पर्शाद्युपलब्धेरभावात्। भावेन्द्रियमपि द्वेधा लब्धिरुपयोगश्च। तत्र लब्धिस्तावद् ज्ञानावरणकर्मक्षयोपशमः सा ह्यात्मनः स्वार्थसंवित्तौ योग्यतामादधती भावेन्द्रियतां प्राप्नोति। न हि तत्राऽयोग्यस्य तदुत्पत्तिर्गगनवत्, इति स्वार्थसंविद्योग्यतैव लब्धिरिन्द्रियम्। उपयोगस्वभावं पुनः स्वार्थसंविदि व्यापारात्मकम्; न ह्यव्यापृत आत्मा स्पर्शादिप्रकाशकः सुषुप्तादीनामपि प्रकाशकत्वप्रसक्तेरिति। द्विविधमेतत् प्रधानेन्द्रियत्वाद् भावेन्द्रियमुच्यते इति।

अत्र सकलसंसारिषु भावात् शरीरव्यापकत्वाच्च स्पर्शनस्य पूर्वं निर्देशः, ततः क्रमेणाऽल्पाल्पजीवविषयत्वाद् रसन-घ्राण-चक्षुः-श्रोत्राणाम्। तत्र स्पर्शनेन्द्रियं तावत् पृथिव्यप्तेजो-वायु-वनस्पतीनां स्थावराणामागमात्प्रतिपत्तव्यम्। अनुमानं च– ज्ञानं क्वचिदात्मनि परमापकर्षवद्,अपकृष्यमाणविशेषत्वात् परिमाणवत्, यत्र च तदपकर्षपर्यन्तस्त एकेन्द्रियाः स्थावराः, न च स्पर्शनेन्द्रियस्याप्यभावे भस्मादौ ज्ञानस्यापकर्षो युक्तः, तत्र हि ज्ञानस्याऽभाव एव न पुनरपकर्षः, ततो यथा गगनपरिमाणादारभ्याऽपकृष्यमाणविशेषं परिमाणं परमाणौ परमापकर्षवत्, एवं ज्ञानमपि केवलज्ञानादारभ्याऽपकृष्यमाणविशेषमेकेन्द्रियेष्वत्यन्तमपकृष्टं भवति; स्पर्शन-रसनेन्द्रिये कृमि-शङ्ख-शुक्तिका-जलौकाप्रभृतीनां त्रसानां, स्पर्शन-रसन-घ्राणानि पिपीलिका-पेचिका-कुन्थु-शतपदी-प्रमुखाणां,स्पर्शन-रसन-घ्राण-नेत्राणि भ्रमर-मक्षिका-दंश-मशका-

दीनां, स्पर्शन-रसन-घ्राण-चक्षुः-श्रोत्राणि मत्स्योरग-पक्षि-चतुष्पदानां तिर्यग्योनिजानां सर्वेषां च नारक-मनुष्य-देवानामिति।

ननु पञ्चैवेन्द्रियाणीति कथं यावता वचना-ऽऽदान-विहरणोत्सर्गाऽ-नन्दग्रहणानि वाक्-पाणि-पाद-पायूपस्थलक्षणानि अन्यान्यपीन्द्रियाणि सांख्या आहुः?। सत्यम्, युक्तिरिक्तं पुनरेतत्, ज्ञानहेतूनामेवेन्द्रियत्वेनाधिकारात्, चेष्टाविशेषनिमित्तत्वेनेन्द्रियत्वकल्पने चेष्टाविशेषाणामनियतत्वेनेन्द्रियाणां प्रतिनियतसङ्ख्याव्यवस्थानुपपत्तेः। ये तु पृथिव्यप्तेजो-वायुभ्यो घ्राण-रसन-चक्षुःस्पर्शनेन्द्रियभावमाहुस्तदसत्, पृथिव्यादीनामन्योन्यं सर्वथा द्रव्यान्तरत्वाऽभावात्। अन्यथा जलादेर्मुक्ताफलादिपरिणामाभावप्रसङ्गात्। अथ मतं "पार्थिवं घ्राणं रूपादिषु सन्निहितेषु गन्धस्यैवाऽभिव्यञ्जकत्वाद् नागकर्णिकाविमर्दककरतलवदिति। तदप्यसत्; हेतोः सूर्यरश्मिभिरुदकसेकेन चानेकान्तात्। दृश्यते हि तैलाभ्यक्तस्य सूर्यमरीचिकाभिर्गन्धाभिव्यक्तिः, उदकसेकेन च भूमेरिति। आप्यं रसनं रूपादिषु सन्निहितेषु रसस्यैव व्यञ्जकत्वाद् लालावदित्यत्रापि हेतोर्लवणेन व्यभिचारित्वं तस्याऽनाप्यत्वेऽपि रसाभिव्यञ्जकत्वोपलब्धेः। चक्षुस्तैजसं रूपादिसान्निध्ये रूपस्यैवाभिव्यञ्जकत्वात् प्रदीपवदित्यत्रापि हेतोर्माणिक्याद्युद्द्योतितेन व्यभिचारः। वायव्यं स्पर्शनं रूपादिसन्निधौ स्पर्शस्यैवाऽभिव्यञ्जकत्वात् तोयशीतस्पर्शव्यञ्जकवायुवत्, अत्राऽपि जलशीतस्पर्शव्यञ्जककर्पूरादिना व्यभिचारः। अपिच पृथिव्यप्तेजःस्पर्शाभिव्यञ्जकत्वात्स्पर्शनेन्द्रियस्य पृथिव्यादिकार्यत्वमासज्येत वायुस्पर्शाभिव्यञ्जकत्वाद्वायुकार्यत्ववत्। चक्षुषश्च तेजोरूपाभिव्यञ्जकत्वात् तेजस्कार्यत्ववत् पृथ्वीजलसमवेतरूपव्यञ्जकत्वात् पृथिव्यप्कार्यत्वाऽनुषङ्गः। रसनस्य च जलीयरसाऽभिव्यञ्जकत्वाद् जलकार्यत्ववत् पृथ्वीरसाभिव्यञ्जकत्वात् पृथ्वीकार्यत्वप्रसङ्गः।

नाभसं श्रोत्रं रूपादिषु सन्निहितेषु शब्दस्यैवाऽभिव्यञ्जकत्वा-दित्यप्यसाम्प्रतम्, शब्दे नभोगुणत्वस्य प्रतिषेत्स्यमानत्वात्। एतेनेदमपि प्रत्युक्तं, शब्दः स्वसमानजातीयविशेषगुणवतेन्द्रियेण गृह्यते सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वात्, बाह्यै-केन्द्रियप्रत्यक्षत्वे सति अनात्मविशेषगुणत्वाद्वा रूपादिवदिति। ततो नेन्द्रियाणां प्रतिनियतभूतकार्यत्वं व्यवतिष्ठते प्रमाणाभा-वात्; प्रतिनियतेन्द्रिययोग्यपुद्गलारब्धत्वं तु द्रव्येन्द्रियाणां प्रति-नियतभावेन्द्रियोपकरणभूतत्वाऽन्यथानुपपत्तेर्यौक्तिकमेवेति॥१३॥

इदानीमसाधारणकार्योपदेशेन लक्षणमिन्द्रियाणामावि-ष्करोति—

## स्पर्श-रस-गन्ध-रूप-शब्दास्तदर्थाः॥१४॥

तेषामिन्द्रियाणां ग्राह्या अर्थाः स्पर्शादयः, क्रमेण स्पर्शग्रहणं स्पर्शनम्, रसग्रहणं रसनम्, गन्धग्रहणं घ्राणम्, रूपग्रहणं चक्षुः, शब्दग्रहणं श्रोत्रम्। सर्वत्र करणेऽनट्प्रत्ययस्तेन नात्मन्यतिप्रसङ्गः। तत्र स्पर्शाः मृदु-कठिन-गुरु-लघु-शीतोष्ण-स्निग्ध-रूक्षाः। अत्रा-ऽन्त्याश्चत्वार एवाऽणुषु भवन्ति स्कन्धेषु पुनर्यथासम्भवमष्टावपि वेदितव्याः, रसास्तिक्त-कटु-कषाया-ऽऽम्ल-मधुराः, लवणो मधु-रान्तर्गत एवेत्यन्ये, संसर्गज इत्यपरे, गन्धौ सुरभ्यसुरभी; कृष्णा-दयो वर्णाः; शब्दो ध्वनिरिति। अत्र च स्पर्शस्याऽऽदौ ग्रहणं स्पर्शे सति रस-गन्ध-रूपसद्भावज्ञापनार्थं तेन जलादीनां स्पर्शादिचतु-र्गुणत्वं सिद्धं भवति। मनोऽपि पार्थिवाणुवदसर्वगतद्रव्यत्वेन स्पर्शादिमद्वेदितव्यम्। एतेन पृथ्वी गन्धवतीत्यादि प्रलपितमेव तीर्थान्तरीयाणामिति॥ १४॥

अथ मनो निरूपयति—

## सर्वाऽर्थग्रहणमनिन्द्रियं मनः॥ १५॥

सर्वेऽर्था न तु स्पर्शनादीनां स्पर्शादिवत् प्रतिनियता एव गृह्य-

न्तेऽनेनेति सर्वार्थग्रहणमनिन्द्रियं मनःपदं तस्यैव परिचायकं नामान्तरम्ः नोइन्द्रियमप्येतदेवः अत्रापि ग्रहणपदं करणसाधनं तेनात्मनि नाऽतिप्रसङ्गः, तस्य तत्र कर्त्तृत्वात् । सर्वार्थग्रहणं च "श्रुतमनिन्द्रियस्य" इत्यनेन सूत्रेणाऽऽह भगवान् श्रीवाचकमुख्यः, तत्र हि श्रुतपदेन तद्विषयो ग्रहीतव्यः, श्रुतं च मतेरुपलक्षणमिति मतिश्रुतयोर्यो विषयः स मनसो विषय इति निगर्वः, यदाऽऽह स एवोत्तानार्थम्—"मतिश्रुतयोर्निबन्धो सर्वद्रव्येष्वसर्वपर्यायेषु" इति, इन्द्रियवद् मनोऽपि द्विधा द्रव्यमनो भावमनश्च तत्र द्रव्यमनो मनस्त्वेन परिणतानि पुद्गलद्रव्याणि, भावमनश्च ज्ञानावरणीयकर्मक्षयोपशमात्मा लब्धिरात्मनश्चाऽर्थग्रहणोन्मुखो व्यापारविशेष इति ॥ १५ ॥

संप्रति मनसोऽप्राप्यकारित्वमावेदयति—

## तदप्राप्यकारि ॥ १६ ॥

तदिति मनोऽप्राप्यकारि विषयमप्राप्य परिच्छेदीत्यर्थः । ननु जागरावस्थायां निद्रावस्थायां वा देहान्निर्गत्य सुमेरुशिखरस्थजिनप्रतिमादिविषयेण मनसोऽभिसम्बन्धोऽनुभवसिद्धः । वदन्ति हि वक्तारोऽमुत्र मे मनो गतमिति प्राप्यकारित्वं मनसो युक्ताभ्युपगममिति चेत्, प्रमत्तगीतमेतद्, विषयसम्पर्के ह्यभ्युपगम्यमानेऽस्य जल-ज्वलनादिविषयपरिचिन्तनकाले अनुग्रहोपघाताववश्यं भवेतां, दृष्टौ हि प्राप्यकारिषु स्पर्शन-रसन-घ्राण-श्रोत्रेषु कर्कशकम्बलादिस्पर्शने, त्रिकटुकाद्यास्वादने, अशुच्यादिपुद्गलाऽऽघ्राणे, भेर्यादिशब्दाऽऽकर्णने च त्वक्क्षणनाद्युपघातः, चन्दना-ऽङ्गना-हंसतूलादिस्पर्शने, क्षीरशर्कराद्यास्वादने, कर्पूरपुद्गलाद्याघ्राणे, मृदुमन्द्रशब्दादिश्रवणे च शैत्याद्यनुग्रहश्च । एवं च यदि मनोऽपि विषयाभिसम्बन्धमादधीत, स्यात् खल्वस्य जल-चन्दनादिचिन्तनकाले पिपासोपशमाद्यनुग्रहः, वह्न्यादिचि-

न्तने च दाहाद्युपघातो दर्शनविषयः। न चैवं तस्मादप्राप्यकारि।

किञ्च मनोऽपि द्वेधा भवति भावमनो द्रव्यमनश्च, तत्र न तावद् भावमनसः प्राप्यकारित्वं न्यायक्षमम्, तथाहि– भावमनः चिन्ताज्ञानपरिणामरूपत्वाद् जीवरूपमेव जीवश्च देहमात्रवृत्तिः, नाऽतस्तस्य देहाद् वहिर्निस्सरणं युक्तं, न हि देहमात्रवृत्तयो रूपादयो देहाद् वहिर्निस्सरन्तो दृष्टाः। न च सर्वगत आत्मा अमूर्तत्वाद् गगनवदित्यनुमानवलेन सर्वगतत्वमात्मनो युक्तं वक्तुम्; सर्वगतत्वे ह्यात्मनः कर्तृत्वादयो धर्मा गोपाङ्गनादि-प्रतीतिसिद्धा नोपपद्येरन्, तथाहि– न कर्त्ता आत्मा सर्वगतत्वाद् गगनवद्, एवं न भोक्ता, न संसारी, न ज्ञानी, न सुखी, न दुःखी-त्यपि तत एव हेतोस्तेनैव दृष्टान्तेन वोद्धव्यम्।

ननु नेदं वाधावहं स्वीकुर्वते हि कापिला निष्क्रियत्वादात्मनः कर्तृत्वाद्यभावम्, यदूचुः– " अकर्त्ता निर्गुणो भोक्ता आत्मा " इत्यादि तदेतदसारम्, तस्य निष्क्रियत्वे प्रत्यक्षप्रमाणप्रसिद्धभो-क्तृत्वादिक्रियाविरोधप्रसङ्गात्। न च प्रकृतेरेव भोगादिक्रिया पुरुषस्तु पुष्करपलाशवन्निर्लेपः, आदर्शप्रतिविम्बोदयन्यायेनैव क्रियाणां तत्राभ्युपेतत्वादिति परिष्कृतालापः, प्रकृतेरचेतनत्वात् " चैतन्यं पुरुषस्य स्वरूपम् " इति वचनात्, अचेतनस्य च भोगादिक्रियाऽयोगात्। इतरथा घटादीनामपि तत्प्रसङ्गात्। किञ्च सर्वगतत्वे पुरुषस्य नानादेशगतस्रक्-चन्दना-ऽङ्गनादि-परिस्पर्शेऽनवरतसुखासिकाप्रसक्तिः, वह्नि शस्त्र-जलादिसम्बन्धे तु निरन्तरदाहपाटनक्लेदादिप्रसङ्गश्च। यत्रैव शरीरं तत्रैव सर्वमिदं भवतीति चेत्?। कुत एतत्?, आज्ञामात्रादेवेति चेत्?। न, तस्येहाविषयत्वात्, सहकारितया तस्य तदपेक्षितव्यमितिचेत्?। न, नित्यस्य सहकार्यपेक्षाऽयोगात्, तथाहि– अपेक्ष्यमाणेन सहकारिणा तस्य कश्चिद् विशेषः क्रियते न वा?, क्रियते चेत् असौ किमर्थान्तरभूतो विपरीतो वा?, आद्ये न किञ्चित् कृतं

तस्य; द्वितीये तत्करणे तदभिन्नस्याऽऽत्मनोऽपि करणप्रसङ्गाद्-नित्यत्वानुषङ्गः । अथ माभूदेष दोषः "न क्रियते" इत्यभ्युपगमः, हन्त ! तर्हि नाऽसौ तस्य सहकारी विशेषाकरणात्, विशेषमकुर्वतोऽपि सहकारित्वस्वीकारे सर्वस्याऽपि तत्प्रसङ्गः, विशेषाकरणाऽविशेषात्, इति व्यर्था शरीरमात्रापेक्षा । तस्माच्छरीरमात्रवृत्तिरेवात्मा न सर्वगतः । अत्रत्यं किञ्चिदधिकं तत्त्वमग्रे वक्ष्यामः । अतस्तद्व्यतिरिक्तस्य भावमनसोऽपि न शरीराद् बहिर्निःसरणमुपपत्तिमदिति ।

अथ द्रव्यमनो विषयदेशमभियाति तदप्यसुन्दरम्, तस्याऽचेतनत्वेन विज्ञातृत्वाऽभावाद् उपलशकलवद् । असति च विज्ञातृत्वे गत्वाऽपि कञ्चिद्विषयदेशं किं तद् वराकं करोतु ?, तत्र गतादपि तस्मादर्थावगमाभावात्; स्यादेतत् : मा ज्ञासीद् द्रव्यं मनः, तेन पुनः करणभूतेन प्रदीपादिनेव वस्तुप्रकाशने को बाधः ? । गतवता हि विषयदेशं करणभूतेन द्रव्यमनसा जीवः कर्त्ता जानीयात् तद् वस्तु, तथाच प्रयोगो बहिर्निर्गतेन द्रव्यमनसा प्राप्य विषयमवगच्छति जीवस्तस्य करणत्वात् प्रदीप-मणि-चन्द्र-सूर्यादिप्रभयेवेति । अत्रोच्यते, मन्यामहे खलु द्रव्यमनः करणं, किन्तु करणं द्विविधं भवति शरीरगतमन्तःकरणं तद्बहिर्भूतं बाह्यकरणं च, तत्रेदं द्रव्यमनोऽन्तःकरणमेवात्मनः, तथाच देहस्थितेन तेन जीवो जानीते वस्तुरूपं स्पर्शनेन्द्रियेणेव कमलनालादिस्पर्शम्; प्रयोगश्च यदन्तःकरणं तेन शरीरस्थेनैव जीवो गृह्णाति विषयं यथा स्पर्शनेन, अन्तःकरणं च द्रव्यमनः, इति सिद्धं विषयदेशमप्राप्य गृह्णाति मन इति ।

स्यादेतत् । मृतनष्टादि वस्तु परिभावयतः शोकाद्यतिशयेन दौर्बल्यादिभिरुपघातोऽभीष्टसङ्गमविभवलाभादि परिचिन्तयतो हर्षादिभिरनुग्रहश्च मनसोऽनुभवसिद्धः, नाऽतस्तदभावनिबन्धनमप्राप्यकारित्वं तत्र न्याय्याऽभ्युपगममिति । एतदप्यपेशलम्,

यतो मनस्त्वपरिणतानिष्टपुद्गलनिचयरूपं द्रव्यमनोऽनिष्टचिन्ताप्रवर्त्तनेन जीवस्य देहदौर्बल्यापत्त्या हृन्निरुद्धवायुवदुपघातं जनयति, तदेव च शुभपुद्गलपिण्डरूपं तस्याऽनुकूलचिन्ताप्रवर्त्तनेन हर्षाद्यभिनिर्वृत्त्या भेषजवदनुग्रहं करोतीति जीवस्यैवैतावनुग्रहोपघातौ द्रव्यमनः करोति, न तु मन्यमानं सुमेर्वादि ज्ञेयं मनसः किमप्युपकल्पयाति । तस्माद् द्रव्यमनसः सकाशादात्मन एवानुग्रहोपघातसद्भावात्, मनसस्तु ज्ञेयात् तद्गन्धस्याप्यभावाद् हेतोरसिद्धिबन्धकोसम्बन्धाभिधानमबन्धुरमेव ; सिद्धश्चायमर्थः, यथा ह्याहार इष्टानिष्टपुद्गलमयत्वात् तदनुभावात् प्राणिशरीराणां पुष्टि-हानी उत्पादयति तथा द्रव्यमनोऽपि तन्मयत्वाद् यदि तेषां ते निर्वर्त्तयति तदा किं क्षूयते?, येन पुद्गलमयत्वे समानेऽपि भवतोऽत्रैवाऽक्षमा । तथाचोक्तं "चिन्तया वत्स! ते जातं शरीरकमिदं कृशम्" इति । न च चिन्तैव कार्श्याद्युपघातादिजनिका, तस्या अपि द्रव्यमनःप्रभवत्वात्, अन्यथा हि चिन्ताया ज्ञानरूपत्वाद् ज्ञानस्य चाऽमूर्त्तत्वाद् नभस इवोपघातादिहेतुत्वं कुतः सम्भवति ?। ननु द्रव्यमनस इष्टानिष्टपुद्गलमयत्वे श्रद्धामात्रेण समाश्वासः, न्यायोऽपि वा कश्चिच्चकास्ति ?, न्यायोऽपि चकास्ति । तथाहि– यदन्तरेण यदनुपपन्नं तद्दर्शनात्तदस्तीति प्रत्येयं, यथा स्फोटदर्शनाद् दहनस्य दाहिका शक्तिः, नोपपद्येते चेष्टानिष्टपुद्गलसङ्घातात्मकद्रव्यमनोव्यतिरेकेण जन्तूनामिष्टाऽनिष्टचिन्तने समुपलब्धौ मुखप्रसाददेहदौर्बल्याद्यनुग्रहोपघातौ ततस्तदन्यथाऽनुपपत्तिरेव यथोक्तरूपं द्रव्यमनः प्रसाधयति । न च चिन्तनीयवस्तुकृतत्वमनयोः शक्यं शङ्कितुम्, जल-ज्वलनौदनादिचिन्तने क्लेद-दाह-बुभुक्षोपशमादिप्रसक्तेः, खेदादेस्तदुद्भूतिरपि नाऽऽरेकणीया तस्य मनोद्रव्यरूपत्वे सिद्धसाधनात्, चिन्तादिज्ञानरूपत्वे विहितोत्तरत्वात् । न च निर्हेतुकात्वम्, सर्वदा भवनाऽभवनप्रसङ्गात्, तदुक्तं ताथागतपथधुरा-

धौरेयश्रीधर्मकीर्त्तिना—

"नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः" ॥१॥ इति

न च जीवादिक एवाऽन्यः कोऽपि तद्धेतुस्तस्य सदाऽवस्थितत्वेन सदाभवनाऽभवनप्रसङ्गादिति सिद्धं पुद्गलमयं द्रव्यमनो मन्तुः स्वयं कुर्यादनुग्रहोपघातौ, ज्ञेयकृतौ तु मनसो न स्त एवेति, तस्मादप्राप्यकारि मनः ।

यत्तु "अमुत्र मे मनो गतम्" इत्याद्यनुभवात् स्वप्ने मनसः प्राप्यकारित्वं युक्ताभ्युपगममित्यूदे, तदप्यसारम् । तथाहि—यथा खलु अलातं वृत्ताकारतया आशु भ्रम्यमाणं भ्रमवशादचक्रमपि चक्रतया प्रतिभासमानमसत्यम्, अचक्ररूपताया एव तत्राऽवितथत्वाद्, भ्रमणोपरमे स्वभावस्थस्य तस्य तथैव दर्शनात्, एवं स्वप्नोऽप्यसत्य एव तदुपलब्धस्य मनोमेरुगमनादिकस्याप्यर्थस्याऽसत्यत्वात्, तदसत्यता च प्रबुद्धस्य तदभावात्, तदभावश्च तदवस्थायां देहस्थत्वेनैव मनउपलब्धेः । अथ स्वप्नावस्थायां मेर्वादौ गत्वा जाग्रदवस्थायां पुनर्निवृत्तं तद्भविष्यतीति चेत् । न, यथा हि कश्चिदात्मीयं मनः स्वप्ने मेर्वादिगतं पश्यति तथा कोऽपि शरीरमात्मानमपि नन्दनतरुकुसुमावचयादि विदधानं तद्गतमालोकयति, न च तत् तथैव इहस्थैः सुप्तस्य तस्याऽत्रैव दर्शनाद् द्वयोश्चात्मनोरसम्भवात्, कुसुमपरिमलाद्यध्वजनितपरिश्रमाद्यनुग्रहोपघाताभावाच्च । यत्तु प्रबोधनानन्तरं कस्यचिद् हर्षविषादादि तत् स्वाप्निकसुखानुभवादिविषयविज्ञानादुपपन्नमेव; दृश्यते खलु जाग्रदवस्थायामपि स्वयमुत्प्रेक्षितसुखानुभवादिविज्ञानाद् हृष्यन्तो द्विषन्तो वा बहवः, न पुनर्भोजनादिक्रियाफलं तृप्त्यादिकं स्वप्नविज्ञानाद् युक्तं भवितुम्, यदि चैतत्स्यात् स्यात् तदा प्राप्यकारित्वं मनसः ।

योऽपि सुरतसङ्गमक्रियासमुद्भूतव्यञ्जनविसर्गः स्वप्ने प्रति-

बुद्धस्य कस्यचित् प्रत्यक्षप्रमागोचरः, सोऽपि तीव्रमानसाध्यवसायकृतो वेदितव्यः, न पुनस्तदानीं वास्तवयोषाभिष्वङ्गः सम्भावनीयः। अन्यथा प्रबोधन एव प्रियतमां सन्निहितामालोकेत। भवति हि जाग्रतोऽपि तीव्रमोहस्य कामिनीं स्मरतः स्मरणातिरेके प्रत्यक्षामिव तां निभालयतो बुद्ध्या परिष्वजतः परिभुक्तामिव मन्वानस्य तीव्राध्यवसाने व्यञ्जनविसर्ग इति न प्राप्यकारि मनः। सत्यासत्यत्वमपि स्वप्नस्य न प्रकृतसिद्धान्तबाधधीरं चेतोवृत्तिविशेषस्य शुभाशुभफलनिमित्तत्वाऽविरोधात्। अमुत्र मे मनो गतमिति तु रूढिमात्रं चक्षुषः चन्द्रं गतमिति रूढिवत्। न च चन्द्रप्राप्तिश्चक्षुषः पारमार्थिकी वह्न्यादिदर्शनेन तत्कृतदाहादिप्रसङ्गात्। न च सर्वाऽपि रूढिः सत्या भवति।

"वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः।
पर्वते पर्वते रामः सर्वगो मधुसूदनः" ॥ १ ॥

इत्यादिकाया असत्याया अपि दर्शनादिति ॥ १६ ॥

ननु मन एवाऽप्राप्यकारि न किञ्चिदिन्द्रियम्? अत्राह–

## चक्षुश्च ॥ १७ ॥

चकारः समुच्चयाऽर्थः प्रमाणमत्र चक्षुरप्राप्यकारि अधिष्ठानाऽसम्बद्धार्थग्राहकेन्द्रियत्वाद् मनोवदित्यनुमानम्। अधिष्ठानेत्यादिविशेषणेन स्पर्शनादौ इन्द्रियपदेन प्रदीपप्रभायां व्यभिचारव्युदासः। नचायमप्रयोजको हेतुः, सम्बद्धार्थग्राहकत्वे तस्य करवाल-जलालोकनादिनोपघातानुग्रहप्रसङ्गात्। ननु मुहुर्मुहुः सूरकर-जलावलोकनाभ्यां दाह-शैत्यलक्षणोपघातानुग्रहोपलम्भादसिद्ध एव तस्यानुग्रहोपघाताभाव इति चेद्। मन्दम्, अवलोकनानन्तरं चक्षुर्देशं प्राप्तेन मूर्त्तेन रविकरादिनोपघातसम्भवात्, जलावलोकनादौ चोपघाताभावेनानुग्रहाऽभिमानात्, स्वतस्तद्देशं प्राप्तेन च चन्द्रमरीचिनीलादिना भवत्येवाऽनु-

ग्रहोऽपि यदि च चक्षुः स्वत एवानुग्राहकोपघातकवस्तुनी संसृज्य लभेतानुग्रहोपघातौ स्यात्तर्हि सूरकरावलोकनादिव करवाला-द्यवलोकनादप्यभिघात इति ।

यत्तु नयनान्नायना रश्मयो निर्गत्य प्राप्य च वस्तु रविरश्मय इव प्रकाशमादधति सूक्ष्मत्वेन तैजसत्वेन च तेषां वह्न्यादिभिर्दाहादयो न भवन्तीति मतम् । तदपमतम्; चक्षु-षस्तैजसत्वस्यैवाऽसिद्धेः चक्षुस्तैजसं रूपादिमध्ये रूपस्यैवा-ऽभिव्यञ्जकत्वात् प्रदीपवदित्यनुमानं तु चक्षुर्विषयसंयोगेन व्यभिचारान्न तैजसत्वसाधनधीरम् । न च तत्र द्रव्यत्वे सतीति विशेषणेन व्यभिचारपरिहारः, अञ्जनविशेषेण तस्य जागरू-कत्वात् । एतेन रूपसाक्षात्काराऽसाधारणं कारणं तैजसं रसा-द्यव्यञ्जकत्वे सति स्फटिकाद्यन्तरितप्रकाशकत्वात् प्रदीप-वदित्यप्यपास्तम् । अञ्जनादिभिन्नत्वे सतीति विशेषणदाने चाऽप्रयोजकत्वात् चक्षुःप्रदीपयोरेकया जात्या व्यञ्जकत्वा-सिद्धेः । एतेन स्वप्नादिकमिवाञ्जनादिकं सहकृत्य मनसैव सा-क्षात्कृते चाक्षुषत्वभ्रम इत्युक्तावपि न क्षतिः, वस्तुत एवमञ्जनादेः पृथक्प्रमाणत्वप्रसक्तिः, मनो यदसाधारणं सहकार्यासाद्य बहि-र्गोचरां प्रमामाविर्भावयति तस्य प्रमाणान्तरत्वनियमात् । न च पटपटलाच्छन्नचक्षुषामञ्जनादिजनितो निध्यादिसाक्षात्कारो न प्रमेत्युक्तिर्न्यायसहा, यथार्थप्रवृत्तिजनकत्वेन तत्प्रमात्वस्य व्यवस्थितत्वात् । न च कारणबाधादप्रमात्वं तस्यैवाऽनुप-पत्तेः । न च स्वप्नादिवदञ्जनादेर्निध्यादिसूचकत्वमेव, व्याप्तिग्र-हादिकं विनाऽनुमितिरूपतत्सूचनाऽसम्भवात्, स्वप्नादिस्थले तु व्याप्तिग्राहकस्वप्नशास्त्राद्यनुसरणनियमादिति । स्यादेतत्, च-क्षुषोऽप्राप्यकारित्वेऽसन्निहितत्वाऽविशेषात् कुड्यादिव्यवहिता-नामपि ग्रहणप्रसङ्गः । तन्न, अतिसन्निहितस्य गोलकादेरिव भित्त्यादिव्यवहितस्याऽपि योग्यताविरहादेवाऽग्रहात् ।

यत्तु प्रत्यक्षविशेषे इन्द्रियविषयसन्निकर्षो हेतुरनुगत एवेति पराभिप्रायः, नाऽसौ समीचीनः परमाण्वाकाशादौ व्यभिचारात्। न च महत्त्वसमानाधिकरणोऽद्भूतरूपवत्त्वस्याऽपि सहकारित्वाद् न दोष इति सम्यग्मतम्, समाकलितसकलनेत्रगोलकस्य दूराऽऽसन्नतिमिररोगावयविन उपलम्भप्रसङ्गात्। अत्यन्तासद्यभावस्याऽपि सहकारित्वस्वीकारे चाऽधिष्ठानसंयुक्ताञ्जनशलाकाया अप्यप्रत्यक्षत्वप्रसङ्गात्। अग्रावच्छेदेन चक्षुःसंयोगस्य हेतुत्वेऽपि उदीचीं प्रति व्यापारितचक्षुषः काञ्चनाऽचलोपलम्भप्रसङ्गात्। दूरत्वेन नेत्रगतिप्रतिबन्धे च शशधरस्याऽप्यनुपलम्भप्रसङ्गात्; तदभीषुभिरिव तिग्मकराभीशुभिरपि तदभिद्दृद्धेश्वाऽविशेषात्। तिग्मत्वेन तिग्मकरकराणां तत्प्रतिघातकत्वे च तदालोकपरिकलितपदार्थमात्राभानप्रसङ्गादिति। इन्द्रियसम्बन्धत्वेन प्रत्यक्षहेतुत्वेऽपि सामीप्यविशेषेण संयोगस्याऽन्यथासिद्धिरित्यपि श्रेयान् पन्थाः। प्राप्यकारित्वे च चक्षुषः शाखाचन्द्रमसोर्युगपद्ग्रहानुपपत्तिदोषसमवतारो दुर्निवारः, युगपत्संयोगाऽनुपपत्तेः।

न च शतपत्रसूचीवधव्यतिकरेण तत्र यौगपद्याभिमान एव क्रमेणैव वेगातिशयादुभयसंयोगेनोभयसाक्षात्कारोत्पादनादिति युक्तं वक्तुं चन्द्रज्ञानानुव्यवसायसमये शाखाज्ञानस्य नष्टत्वेन "शाखाचन्द्रौ साक्षात्करोमि" इत्यनुव्यवसायानुपपत्तेः। न च क्रमिकतदुभयानुभवसमुत्पादितसंस्काराभ्यां जनितायां समूहालम्बनस्मृतावेवानुभवत्वाऽऽरोपात् तथाऽनुव्यवसाय इति; साम्प्रतं तादृगारोपादिपरिकल्पनायां प्रमाणाभावाद् महागौरवाच्च। न च तिर्यग्भागावस्थितयोः शाखाचन्द्रमसोर्युगपत्संयोग इति युक्तम्, सन्निहितव्यवहितयोर्युगपत्संयोगेऽतिप्रसङ्गात्, नयनान्निस्सरता नायनेन तेजसाऽर्थसंसर्गसमकालमेव बाह्यालोकसहकारेणान्यनेत्रारम्भात् शाखाशश-

धरयोर्युगपद्ग्रह इत्यपि तुच्छम्, उद्भूतरूपवत्तेजःसंसर्गेणाऽनुद्भूतरूपवत्तेजस आरम्भानभ्युपगमाद् बाह्यचक्षुषा पृष्ठावस्थितवस्तुग्रहप्रसङ्गाच्च । चक्षुःप्राप्यकारित्ववादे च काचाभ्रपटलस्फटिकाद्यन्तरितवस्तुग्रहानुपपत्तिदोषो दुरुद्धरः । प्रसादस्वभाववतां स्फटिकादीनां न नायनरश्मिगतिप्रतिबन्धकत्वमिति तु तुच्छं नायनरश्मिपदार्थस्यैवाऽसिद्धेः, तमन्तरेणापि समुपपत्तिमताऽप्राप्यकारित्वेन वस्तुपरिच्छेदसिद्धेः, तदन्यथानुपपत्तेरपि तत्र प्रमाणत्वेनाऽशक्याभिधानत्वात् ।

अभ्यधिष्महि च—

"प्राप्यार्थं नयनं प्रतीतिजननं स्वीचक्रुषां का मतिः
नो काचान्तरितार्थबुद्धिरुदयेत् प्राप्यग्रहे चक्षुषा ? ।
कुड्याद्यन्तरितार्थबुद्धिरुदयेदप्राप्यबोधेऽपि चेद्
नैवं नेदृशयोग्यता ह्यपरथा स्याद् गन्धधीश्चक्षुषा ॥१॥ इति

स्पर्शन-रसन-घ्राण-श्रोत्रेन्द्रियाणि तु प्राप्यकारीण्येव, उक्तश्चात्राऽनुभवः । ननु घ्राणं श्रोत्रं च प्राप्यकारि न संभवति विवक्षितदेशाद् हि दूरदेशमपि स्वविषयमेते गृह्णीतः, आनुभौतिकश्चायमर्थः । न हि शब्दः कश्चित् श्रोत्रेन्द्रिये प्रविशन् समुपलभ्यते; नाऽपि श्रोत्रेन्द्रियं दूरप्रदेशे गच्छद् भवितुमर्हति; न चाऽऽभ्यां प्रकारान्तरेण संघटते विषयाभिसम्बन्धः, भवति च प्रत्ययः "दूर एष कस्याऽपि श्रूयते शब्दः, इति । एवं कर्पूरकुङ्कुमकुसुमादीनां दूरस्थानामपि गन्धो निर्विवादमनुभूतिगोचर इति प्राप्यकारित्वं कुतस्तयोस्समुपपादम् ? । उच्यते, शब्दगन्धौ स्वयमन्यत आगत्य श्रोत्रघ्राणे प्राप्नुतः, न त्वर्हतः श्रोत्रघ्राणे स्वविषयदेशे गन्तुम्, आत्मनोऽबाह्यकरणत्वात् स्पर्शनवत् । न च कश्चिद् बाधः शब्द-गन्धपुद्गलानां सक्रियत्वेन श्रोत्रघ्राणे प्रति समागमनोपपत्तेः, प्रामाणिकश्चाऽयमर्थः, यथाहि पवनपटलेनोह्यमानत्वाद् धूमो गतिक्रियावान् एवं शब्द-गन्धावपि तेनोह्यमानत्वात् तद्व-

न्तौ, तथा संहरणतो गृहादिषु पिण्डीभवनाद् धूमवदेतौ क्रियाभाजौ, तथा पर्वतनितम्बादिषु प्रतिस्खलनाद् गतिक्रियाश्रयावेतौ। अपि च बभस्ति श्रोत्रघ्राणयोः प्राप्यकारित्वे विषयकृतानुग्रहोपघातलक्षणं मुर्द्धाभिषिक्तं साधनम्। न चायमसिद्धं भेर्य्यादिमहाशब्दप्रवेशे बाधिर्य्यरूपोपघातस्य कोमलशब्दश्रवणे चाऽनुग्रहस्य दर्शनात्। घ्राणस्याऽपि अशुच्यादिगन्धप्रवेशे पूतिरोगाऽर्शोव्याधिलक्षणोपघातस्य कर्पूरादिगन्धप्रवेशे चानुग्रहस्याऽनुभवात्। शक्नुवन्ति च सम्बद्धा एव श्रोत्रघ्राणाभ्यां शब्दगन्धाः स्वकार्यभूतमुपघातमनुग्रहं चोत्पादयितुम्, इतरथा सर्वस्याऽपि तज्जननप्रसङ्गादिति ॥ १७ ॥

अथ सांव्यवहारिकप्रत्यक्षप्रकारभूतमवग्रहादिचतुष्टयं सूत्रचतुष्टयेन स्पष्टयितुमुपक्रमते—

## इन्द्रिया-ऽर्थयोगे सत्तामात्रालोचनानन्तरमवान्तरजातिविशिष्टार्थग्रहणमवग्रहः ॥१८॥

इन्द्रियं चक्षुरादि, बाह्यविषयोऽर्थस्तयोर्योगोऽभिसम्बन्धोऽनतिदूरासन्नव्यवहितदेशाद्यवस्थानलक्षणा योग्यतेत्यर्थः, तस्मिन् सति सत्तामात्रग्राहिणोऽनुल्लिखितविशेषस्य आलोचनस्य दर्शनापरपर्यायस्य उदयानन्तरं सत्तावान्तराभिर्मनुष्यत्वादिजातिभिर्विशिष्टस्यार्थस्य ग्रहणं ज्ञानं तदवग्रह इति गीयते। एतेन सत्तामात्रालोचनस्वरूपं दर्शनं परिणामिकारणमवग्रह इति दर्शितम्; न ह्यसत एव सर्वथा कस्याऽपि समुत्पत्तिः सतो वा सर्वथा विनाशः, इति दर्शनमेव तथाविधमुत्तरपरिणामं प्रतिपद्यते इति ॥ १८ ॥

## तद्गृहीतार्थविशेषपरीक्षा ईहा ॥१९॥

तेनाऽवग्रहेण मनुष्यत्वादिसत्त्वावान्तरसामान्यरूपेण गृही-

तेऽर्थे "किमयं दाक्षिणात्य आहोस्विदौदीच्य इत्येवं सन्देहोदये सति अनन्तरम् "दाक्षिणात्येन अनेन भवितव्यं न ह्यमुकेन चिह्नेनायमौदीच्यः सम्भवति" इत्येवंरूपेण विशेषधर्मस्य संशयनिराकरणप्रवणा परीक्षा पर्यालोचनरूपा ईहापदेन भण्यते । नचायमीहाप्रत्ययः संशयरूपः संशयितव्यः, हेतु-हेतुमद्भावेन तयोः पार्थक्यस्य स्पष्टमनुभवात् । आहुश्च श्रीदेवसूरिचरणाः– "संशयपूर्वकत्वाद् ईहायाः संशयाद् भेदः" इति । न चायमनिर्णयरूपत्वादप्रमाणं, स्वविषये निर्णयरूपत्वाद् निर्णयान्तरासादृश्ये तु निर्णयान्तराणामप्यनिर्णयत्वप्रसङ्ग इति ॥ १९ ॥

## तद्गृहीतविशेषावधारणमवायः ॥२०॥

ईहाप्रत्ययेन क्रोडीकृतस्य दाक्षिणात्य एवायमित्येवमवधारणं निर्णयरूपोऽवायपदार्थः ॥ २० ॥

## स्मरणानुगुणं धारणा ॥ २१ ॥

उक्तलक्षणमवधारणं यदा कालान्तरभाविस्मरणोत्पादानुकूलं भवति तदा धारणापदेन व्यवह्रियते दृढतमावस्थापन्नो ह्यवायः स्वोपढौकितात्मशक्तिविशेषरूपसंस्कारद्वारा कालान्तरे स्मरणमर्जयितुं पर्याप्नोति । यद्यप्येकजीवद्रव्यतादात्म्येन द्रव्यार्थादेशाद् दर्शनावग्रहादीनामैक्यं तथापि पर्यायार्थादेशाद् भेदोऽपि निभालनीयः, क्रमेणाप्युत्पादिष्णूनाममीषां क्वचित्क्रमानुपलक्षणमाशूत्पादादुत्पलपत्रशतव्यतिभेदक्रमवदिति ॥२१॥

इत्याचार्यश्रीविजयधर्मसूरीश्वरविहितायाः प्रमाणपरिभाषाया वृत्तिभूते मुनिश्रीन्यायविजयप्रणीते न्यायालङ्कारे प्रत्यक्षस्वरूपवर्णनो द्वितीयः परिच्छेदः ॥ २ ॥

अर्हम् ।

# अथ तृतीयः परिच्छेदः ।



उक्तं प्रत्यक्षमिदानीं परोक्षप्रमाणाऽवसर इति तल्लक्षयति--

## विपरीतं परोक्षम् ॥ १ ॥

साक्षात्करणत्वलक्षणप्रत्यक्षाद्विपरीतस्वरूपमसाक्षात्करणत्वं परोक्षप्रमाणस्य लक्षणम् । अत्राऽपि सामान्यलक्षणानुवादेन विशेषलक्षणविधानात् प्रमाणसामान्यलक्षणं यथार्थज्ञानमनूद्य असाक्षात्करणस्वरूपं विशेषलक्षणं प्रसिद्धस्य परोक्षस्य विधीयते प्रसिद्धस्याऽनुवादेन ह्यप्रसिद्धस्य विधानं लक्षणार्थः, एवं च परोक्षं धर्मि असाक्षात्करणयथार्थज्ञानमिति साध्यो धर्मः परोक्षत्वादिति हेतुर्यन्नैवं तन्नैवं यथा प्रत्यक्षमिति व्यतिरेकित्वम् । परोक्षपदस्य च व्युत्पत्तिं प्रागेव प्रादीदृशामेति ॥ १ ॥

अथ परोक्षप्रकारान् प्रकटयति—

## स्मरण-प्रत्यभिज्ञान-तर्का-ऽनुमाना-ऽऽगमैः पञ्चधा ॥ २ ॥

परोक्षमित्यनुवर्त्तते परोक्षप्रमाणं स्मरणादिप्रकारपञ्चकैः पञ्चधा ॥ २ ॥

तत्र स्मरणं स्मारयति—

## अनुभवमात्रजन्यं तत्तोल्लेखि स्मरणम् ॥३॥

अनुभवमात्रजन्यमिति कारणोपदेशः, तत्तोल्लेखीत्याकारनिवेदनं यथा तत्तीर्थकरबिम्बम् । तत्तोल्लेखित्वं चाऽस्य यो-

श्यतापेक्षया द्रष्टव्यम् । यावता हि "स्मरसि चैत्र ! कश्मीरेषु वत्स्यामस्तत्र द्राक्षा भोक्ष्यामहे" इत्यादिस्मरणे तत्पदोल्लेखो न दृश्यते, दृश्यते तु तेषु कश्मीरेषु इति ता द्राक्षा इति तच्छब्दोल्लेखयोग्यता । न चैवं प्रत्यभिज्ञानेऽपि तत्प्रसङ्गः; तस्य स एवमित्याद्युल्लेखशेखरत्वात् । मात्रपदं च प्रत्यभिज्ञादिव्यवच्छित्त्यर्थम् ।

अनुभवश्च दृढतमावस्थापन्नः स्वोपढौकिताऽऽत्मशक्तिविशेषरूपसंस्कारद्वारेण कालान्तरे स्मरणमर्जयितुं पर्याप्नोति; इति स्मरणस्याऽनुभवजन्यत्वेनाऽनुभवपरिणामिकारणकतया तद्विषयाऽवभासनानैपुणी द्रष्टव्या । ननु अनुभवविषयीकृतभावावभासननिपुणायाः स्मृतेर्विषयपरिच्छेदेऽपि कुतः स्वातन्त्र्यम्, कुतस्तरां च प्रामाण्यमिति चेद् ?, व्याप्तिज्ञानविषयीकृतार्थपरिच्छेदिनोऽनुमानस्याऽपि तथैव किं न स्यात् ? । नैयत्येनाऽऽभात एवाऽर्थोऽनुमानेन विषयीकृतो भवतीति चेत्, स्मृत्यापि तत्तयाऽऽभात एवाऽर्थो विषयीक्रियत इति समः समाधिः ।

एतेनाऽनुभवप्रमात्वपारतन्त्र्यप्रयुक्तमप्रामाण्यं प्रत्यक्षेपि, अनुमानस्याऽपि व्याप्तिज्ञानादिप्रमात्वपारतन्त्र्येणाऽप्रामाण्यप्रसङ्गात्; परापेक्षोत्पत्तिकस्यानुमानस्य विषयपरिच्छेदे स्वातन्त्र्ये तु स्मरणेऽपि किं तत् काकेन भक्षितं येन भवतोऽत्रैवाऽक्षमा ?। तस्मात् प्रत्यक्षादिवदविसंवादकत्वाऽविशेषात् स्मरणमप्रामाण्यकलङ्कविकलमेव, अतीततत्तांशे वर्त्तमानत्वविषयत्वनिबन्धनमप्यप्रामाण्यमशक्यमुद्घोषयितुं सर्वत्र विशेषणे विशेष्यकालभानाऽनियमात् । स्यादेतद्, अनुभूयमानस्य विषयस्याऽभावाद् निरालम्बनं स्मरणं कथं प्रमाणत्वेन युक्तं वक्तुमिति चेत् ? । मैवम्, यतोऽनुभूतार्थेन तस्य सालम्बनत्वं सम्भवत्येव । ननु नष्टीभूतो विषयः कथङ्कारं स्मरणमुत्पादयितुमलम् ?, एवं चार्थानुत्पत्ति तदप्रमाणमेवेति चेत्, तत् किं प्रामाण्यनिबन्धनमर्थजन्यत्वमाविश्चिकीर्षस्याऽऽयु-

ष्मन् ! ? । तत्तु प्रागेव प्रतिविहितम् ; यथैव हि घटाद्यलब्धजन्माऽपि प्रदीपस्तान् प्रकाशयति; तथैव आवरणक्षयोपशमापेक्षेन्द्रियमनोबललब्धजन्मसंवेदनं विषयमवभासयेदिति किमुन्न्यायम् ? ।

यद्भाषेमहि—

स्मृतिप्रामाण्याऽपाकरणनिपुणः कः खलु भुवां
विसंवादातीता न भवति किमध्यक्षवदसौ ? ।
गृहीतग्राहित्वं न हि किमनुमानार्थविषये
समक्षे संबन्धाऽवगमविषयायामनुमितौ ? ॥ १ ॥

अप्रामाण्यं च स्मृतेरभिमेनानां सकलानुमानसमुच्छेदलक्षणोऽभिशापो दुर्निवारः, तया व्याप्तेरविषयीकारे तदुत्थानाऽसम्भवात् । लिङ्गग्रहणसम्बन्धस्मरणपूर्वकमनुमानमिति हि सर्वपार्षदमित्यभ्युपेयमनुमानप्रामाण्यस्यान्यथानुपपत्तेः स्मरणप्रामाण्यमिति । स्मरणलक्षणशून्यं स्मरणवदाभासमानं स्मरणाभासं यथाऽननुभूते मुनिमण्डले तन्मुनिमण्डलमिति ॥ ३ ॥

अथ प्रत्यभिज्ञानं प्रकाशयति—

## अनुभव-स्मरणापेक्षमेकत्वाद्युल्लेखि प्रत्यभिज्ञानम् ॥ ४ ॥

अनुभवः प्रमाणार्पिता प्रतीतिः, स्मरणं चोक्तलक्षणं तदपेक्षमनुभवस्मरणाधीनात्मकमित्यर्थः, इति कारणनिर्देशः, एकत्वाद्युल्लेखीत्याकारोपदर्शनम्, यथा तदेवेदमिति । आदिपदात् तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्येवंसादृश्यादिपरिग्रहः । अयमर्थः, इदन्तोल्लेखी अनुभवः; तत्तोल्लेखि स्मरणम्, तदुभयसमुत्थं पूर्वोत्तरैक्यसादृश्यादिगोचरं यत्सङ्कलनात्मकं ज्ञानं तत् प्रत्यभिज्ञानम्, यथा स एवाऽयं देवदत्त इत्येकत्वोल्लेखि; गोविलक्षणो महिष इति वैलक्षण्योल्लेखि; इदं तस्माद् दूरमिदं तस्मात् समीपमिदममुष्मादल्पं महद् वेत्यादि प्रतियोगित्वोल्लेखि ।

"रोमशो दन्तुरः श्यामो वामनः पृथुलोचनः ।
यस्तत्र चिपिटघ्राणस्तं चैत्रमवधारयेः ॥ १ ॥
पयोम्बुभेदी हंसः स्यात् षट्पादैर्भ्रमरः स्मृतः ।
सप्तपर्णस्तु विद्वद्भिर्विज्ञेयो विषमच्छदः ॥ २ ॥
पञ्चवर्णं भवेद्रत्नं मेचकाख्यं, पृथुस्तनी ।
युवतिश्चैकशृङ्गोऽपि गण्डकः परिकीर्त्तितः" ॥ ३ ॥

इत्येवमादिशब्दश्रवणात् तथाभूतानेव चैत्र-हंसादीनालोक्य तथावचनं सत्यापयति यदा तदा तदपि सङ्कलनज्ञानं प्रत्येयं दर्शन-स्मरणोत्पन्नत्वाऽविशेषात् । यथा चौदीच्येन क्रमेलकं गर्हयताऽभ्यधायि "धिक् करभमतिदीर्घवक्त्रग्रीवं प्रलम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपशदं पशूनाम्" इति । तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमयमर्थः करभपदस्येति प्रत्येति, तदप्यनुभवस्मरणसमुद्भवात्सङ्कलनात्मकं प्रत्यभिज्ञानं ज्ञेयमिति । सादृश्यविषयमुपमानप्रमाणमभ्युपजग्मुषां मतेन वैलक्षण्यादिविषयप्रमाणान्तरस्याप्यनुषज्येताऽभ्युपगम इति विलीयेत प्रमाणनियमव्यवस्था ।

अथ गवये गोसदृशो गवय इति विज्ञानं संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरूपे फले प्रमाणान्तराप्रसाध्ये साधकतमत्वादुपमानतां प्रतिपद्यते इति चेत् । एवं तर्हि महिषे गोविसदृशमहिषोपलक्षणमपि तत्रैव तथाविधफलसाधकतमत्वात् प्रमाणान्तरं न स्यादिति का प्रत्याशा ? । न चोपमानस्य सादृश्यविषयत्वेन स्वीकाराद् तत्रैतस्य सम्भवत्यन्तःपातः । न चाऽसिद्धं संज्ञासंज्ञिसम्बन्धप्रतिपत्तिसाधकतमत्वं तत्र, यतः समहिषमाहेयीमण्डले क्वापि विपिनप्रदेशेऽनच्छायां छायायां रोमन्थायमाने नालिकेरद्वीपवासी कश्चन केनचन प्रहितस्तद्विपिनप्रतिष्ठगोष्ठात् समानय महिषमिति; स च तद्वेदिनममुमेवाऽन्वयुङ्क्त कीदृशो महिष इति तेन च गोविसदृशो

महिष इत्यभिहिते तद्विपिनगोष्ठं प्राप्त आप्तातिदेशवाक्य-स्मरणसहकारेण यमेव गोभ्यो विसदृशं पशुमालोकयति तमेव महिषशब्दवाच्यतया प्रतिपद्यते इति न कश्चित् प्रतिविशेष उभयत्रापि सङ्केतप्रतिपत्तौ।

यदा वा यादृग् गौस्तादृग् गवयः, इति वाक्याहितसंस्कारः प्रमाता तुरङ्गं गोविलक्षणमीक्षमाणो गवयसंज्ञासम्बन्धप्रतिषेधं विधत्ते नायं गवयपदवाच्यः पिण्ड इति तदा गवयसंज्ञासम्बन्ध प्रतिषेधफलं किमेतत्प्रमाणं स्यात् ?। तस्मादेवंविधानां ज्ञानानां सङ्कलनात्मकत्वेन प्रत्यभिज्ञानतैवोपपत्तिमती। इतरथा तु प्रमाणेयत्ता विलीयेतेत्युक्तमेव। यदैव नाम यादृग् गौस्तादृग् गवयः, इति तेनोपाश्रावि तदैव सामान्यतश्चेतसि परिस्फुरति पिण्डे सम्बन्धप्रतीतिरभूद्। यथा पृथुबुध्नोदराकारं वृत्तकण्ठं भावं कुम्भं विभावयेरित्याकर्णनात् कुम्भे, ततो वनविहारिण-स्तस्य गवयसाक्षात्कारे प्राक्तनसामान्याकारसम्बन्धस्मरणे च स एव गवयशब्दवाच्य इत्येवंसङ्कलनज्ञानरूपं प्रत्यभिज्ञानं समुन्मज्जति। एवं गोविसदृशो महिषः, इत्याद्यपि तथारूपत्वात् प्रत्यभिज्ञानमेवेति।

अनेन सदृशः स गौरित्यनधिगतं गवि सादृश्यं परिच्छिन्दद्उपमानं प्रमाणमातिष्ठमानो मीमांसकोऽपि "अनेन महिषेण विसदृशः स गौरित्यनधिगतमहिषवैसदृश्यव्यवसायकस्य प्रमाणान्तरताप्रसङ्गेन शिक्षणीयः। सादृश्याभावो वैसदृश्यमित्यभाव-प्रमाणपरिच्छेद्यमेवेदमिति चेत् ?। हन्त ! तर्हि वैसदृश्याभावः सादृश्यमितीदमपि तत्परिच्छेद्यमेव किं न भवेत् ?। न च वैसदृश्याभावस्य सादृश्यरूपत्वे स गौः सदृशो गवयेनेति विधिमुखेन नोल्लिखेदिति वाच्यम्, अन्यत्राप्यविशेषात्।

शाक्यास्त्वाहुः तच्चेदंतारूपस्पष्टाकारभेदाद् नैकं नाम प्रत्यभिज्ञानरूपं प्रमाणं समस्तीति। तन्न; आकारभेदेऽपि

चित्रज्ञानवदेकस्यास्याऽनुभवसिद्धेः। अनुभवो हि वर्त्तमानकालिकविवर्तमात्रप्रकाशकः, स्मृतिश्चातीतकालिकविवर्त्तद्योतिनी। यत्पुनरतीतवर्त्तमानकालसङ्कलितैक्यसादृश्यादिविषयावलम्बनत्वेनानुभौतिकं संवेदनं तत्प्रत्यभिज्ञाशब्दव्यपदेश्यं कथङ्कारं पृथक्प्रमाणपदवीं नालङ्कुर्यात्? । अत एवाऽगृहीतासंसर्गकमनुभवस्मरणरूपं ज्ञानद्वयमेवैतदित्यपि प्रत्युक्तम्, एवं हि विशिष्टज्ञानाय दत्तो जलाञ्जलिः स्यात्।

अन्ये तु प्रत्यक्षान्वयव्यतिरेकानुविधायित्वात् प्रत्यक्षरूपमेवैतदित्याहुस्तदप्यसाम्प्रतम्। प्रत्यभिज्ञायाः साक्षादक्षान्वयव्यतिरेकानुविधायित्वाऽसिद्धेः, साक्षात्प्रत्यक्षस्मरणान्वयव्यतिरेकानुविधायित्वेनानुभवात्। इतरथा प्रथमव्यक्तिप्रत्यक्षकालेऽपि तदुत्पादापत्तेः। अथ पुनर्दर्शने पूर्वदर्शनाहितसंस्कारप्रबोधप्रभूतस्मरणसहायमिन्द्रियं प्रत्यभिज्ञां निर्वर्त्तयतीति मतिः साप्यसाधुः, प्रत्यक्षस्य स्मृतिनिरपेक्षत्वात्। अपरथा पर्वते धूमध्वजज्ञानस्यापि व्याप्तिस्मरणादिसापेक्षमनसैवोपपत्तिसम्भवेनानुमानमात्रोच्छेदप्रसङ्गात्। न च सहकारिसहस्रसमवधानेऽपि सम्भवत्यविषये प्रवृत्तिः, अविषयश्चेन्द्रियाणां पूर्वोत्तरावस्थाव्यापकमेकत्वादि तत्कथं स्मरणसाहायकेऽपि इन्द्रियाणि तादृशज्ञानोत्पादेऽधीशीरन्?। अञ्जनादिसाहायकेऽपि नेत्रं व्यवहितमपि रूपमेव परिच्छिनत्ति न तु स्वाऽविषयं गन्धादीति विषयविशेषद्वारेण प्रमाणभेदव्यवस्थापनादुक्तलक्षणैकत्वादिविषयग्रहौपयिकं प्रमाणान्तरमवश्यमेषितव्यं तदेव च प्रत्यभिज्ञानम्। अपिच प्रत्यभिजानामीतिविलक्षणप्रत्ययोऽपि तस्य प्रमाणान्तरत्वसाधको वरिवर्ति।

यदभ्यधाम–

यस्तु स्वीकुरुते सुपेशलमतिर्न प्रत्यभिज्ञां प्रमा-
मेकत्वादिधियो ध्रुवं करणतां कस्याप्यसौ व्याहरेत्।

नैषाध्यक्षत उद्भवेदितरथाऽन्याध्यक्षकालेऽपि सो-
न्मज्जेद् न स्मृतितस्ततो ह्यविषये न स्यात्प्रवृत्तिः क्वचित् ॥ १ ॥

प्रत्यभिज्ञानलक्षणशून्यं तद्वदाभासमानं तुल्ये वस्तुनि स एवायमिति एकस्मिंश्च तेन तुल्य इत्यादिज्ञानं प्रत्यभिज्ञानाभासम्, यथा यमलकजातयोरेकस्याः स्त्रिया एकदिनोत्पन्नयोः शरीरसंस्थानरूपादिभिः समानयोरेकत्र द्वितीयेन तुल्योयमिति जिज्ञासनीये स एवायमिति, अपरत्र स एवायमिति बुभुत्सनीये तेन तुल्योऽयमिति ॥ ४ ॥

अथ तर्कस्वरूपं निवेदयति—

## व्याप्तिग्रहणं तर्कः ॥ ५ ॥

वक्ष्यमाणलक्षणा व्याप्तिस्तां गृह्णात्यनेनेति तथाभूतस्तर्कः। तर्कः खलु सकलदेशकालोपसंहारेण व्याप्तिं विषयीकरोति। यथा यत्र यत्र धूमस्तत्र तत्र धूमध्वजः, यत्र च नास्ति धूमध्वजस्तत्र धूमोऽपि न स्यादेवेति, यदि वह्निं विनाऽपि धूमोऽवतिष्ठेत तदा वह्निधूमयोः कार्यकारणभावः सर्वानुभवपथावतीर्णो भज्येतेत्येवंविपक्षबाधकस्तर्कः सर्वदेशकालोपसंहारेण वह्निधूमयोर्व्याप्तिं गृह्णाति। ननु यद्यपि प्रत्यक्षमात्रं व्याप्तिविषयीकारे नाधीशं तथापि विशिष्टं तु तद् भवेदेव तथाहि—महानसादौ तावत् प्रथमं धूमधूमध्वजयोर्दर्शनमेकं प्रत्यक्षं तदनन्तरं च भूयो भूयः प्रत्यक्षाणि प्रवर्त्तन्ते तानि च प्रत्यक्षाणि न सर्वाणि व्याप्तिग्रहे समर्थानि; अपि तु पूर्वपूर्वानुभूतधूमानलस्मृतितत्सजातीयत्वानुसन्धिरूपप्रत्यभिज्ञानसहकृतः कोऽपि प्रत्यक्षविशेषः सर्वोपसंहारवतीं व्याप्तिं गृह्णीयादिति स्मरणप्रत्यभिज्ञानसहकृतप्रत्यक्षविशेषेणैव व्याप्तिग्रहसिद्धौ कृतमन्तर्गडुना तर्केणेति चेत्?। न, सहकारिसहस्रसमवधानेप्यविषये प्रवृत्तिप्रतिषेधस्य प्रागेव प्रतिपादितत्वादिति मा मुहः, सन्ति तु स

रणं प्रत्यभिज्ञानं भूयो भूयोदर्शनरूपं च प्रत्यक्षं संभूय तादृशमेकं ज्ञानमुपजनयितॄणि; यद्धि व्याप्तिग्रहेऽलङ्कर्मीणं भवति स एवोहाऽपरनामा तर्कः। न चासौ विसंवादित्वादप्रमाणम्। अस्य ह्यविसंवादित्वाभावेऽनुमानस्याऽविसंवादित्वे का प्रत्याशा ?। न खलु तर्कस्याऽनुमाननिबन्धनप्रतिबन्धे संवादाभावेऽनुमानस्याऽसौ संघटेत; न चाऽस्य नास्ति निश्चितः संवादो विप्रकृष्टार्थविषयत्वादिति शक्यं वक्तुं तर्कस्य हि संवादसन्देहे कथं निःसन्देहानुमानोत्थानं स्यात् ?; इतिप्रेक्षणीयम्। एवं च प्रत्यक्षस्यापि प्रामाण्यप्रसिद्धिश्रद्धा षण्ढात्तनयदोहद एव। तस्मान्निःसन्देहमनुमानमभिलाषुकेण साध्यसाधनसम्बन्धग्राहि प्रमाणमसन्दिग्धमेवाऽभ्युपेयं संशयाद्यात्मसमारोपव्यवच्छेदकत्वाच्चाऽस्य प्रामाण्येऽनुमानस्येव कः सन्दिहीत परिष्कृतमतिः ?।

यत्तु प्रमाणविषयपरिशोधकत्वान्नासौ प्रमाणपदार्ह इति मतम्, तदप्यज्ञानविजृम्भितम्; प्रमाणविषयस्याऽप्रमाणेन परिशोधनविरोधाद् मिथ्याज्ञानवत् प्रमेयार्थवच्च, प्रयोगोऽपि तर्कः प्रमाणं प्रमाणविषयपरिशोधकत्वादनुमानादिवत्; यस्तु न प्रमाणं स न प्रमाणविषयपरिशोधकः, यथा मिथ्याज्ञानं प्रमेयो वाऽर्थः प्रमाणविषयपरिशोधकश्चायं तस्मात् प्रमाणम्।

तथा प्रमाणं तर्कः प्रमाणानुग्राहकत्वाद् यत्प्रमाणानुग्राहकं तत्प्रमाणं यथा प्रवचनानुग्राहकं प्रत्यक्षमनुमानं वा प्रमाणानुग्राहकश्चायं तस्मात् प्रमाणम्। न च हेत्वसिद्धिः प्रमाणानुग्रहो हि प्रथमप्रमाणप्रतिपन्नार्थस्य प्रमाणान्तरेण तथैवावसायः प्रतिपत्तिदार्ढ्यविधानात्, स चाऽत्रास्ति प्रत्यक्षादिप्रमाणेनावगतस्य देशतः साध्यसाधनसम्बन्धस्य दृढतरमनेनाऽवगमात्। ततः साध्यसाधनप्रतिबन्धावबोधनिबन्धनं तर्कज्ञानं प्रमाणतया प्रतिपत्तव्यं परीक्षादक्षैः। न चोहः सम्बन्धज्ञानजन्मा यतोऽपरापरोहानुसरणादनवस्थाराक्षसी जागृयात् प्रत्यक्षानुपलम्भजन्मत्वात्

तस्य, स्वयोग्यताविशेषवशाच्च प्रतिनियतार्थव्यवस्थापकत्वं प्रत्यक्षवत्। प्रत्यक्षे हि प्रतिनियतार्थपरिच्छेदो योग्यतात एव न पुनस्तदुत्पत्त्यादेः, ततस्तत्परिच्छेदकत्वस्य प्रागेव निराकारात्। योग्यताविशेषः पुनः प्रत्यक्षस्येवाऽस्य स्वविषयज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषः प्रतिपत्तव्यः। ननु यथा तर्कस्य स्वविषये सम्बन्धग्रहणनिरपेक्षा प्रवृत्तिस्तथाऽनुमानस्याऽप्यस्तु, सर्वत्र ज्ञाने स्वावरणक्षयोपशमस्य स्वार्थप्रकाशनहेतोरविशेषात्, तथा च व्यर्था सम्बन्धग्रहणार्थं तर्कोपास्तिः। तन्न, यतोऽनुमानस्याऽभ्युपगम्यत एव स्वयोग्यताग्रहणनिरपेक्षमनुमेयार्थप्रकाशनम्। उत्पत्तिः पुनर्लिङ्गलिङ्गिसम्बन्धग्रहणनिरपेक्षा नास्ति, अगृहीततत्सम्बन्धस्य प्रमातुः क्वचित् कदाचित् तदुत्पत्त्यप्रतीतेः, न च प्रत्यक्षस्याऽपि उत्पत्तिः करणार्थसम्बन्धग्रहणाऽपेक्षा बोभोति स्वयमगृहीततत्सम्बन्धस्याऽपि तदुत्पत्तिप्रतीतेः, तथैव तर्कस्यापि स्वार्थसम्बन्धग्रहणानपेक्षस्योत्पत्तिप्रतीतेर्नोत्पत्तौ सम्बन्धग्रहणापेक्षा यौक्तिकीति।

प्रत्यक्षपृष्ठभाविनं विकल्पं व्याप्तिग्राहकत्वेनाभ्युपेयांसो बौद्धा निर्विकल्पेन व्याप्तेरग्रहणे विकल्पेन निर्विकल्पगृहीतार्थविषयत्वेन कथं शक्योऽस्याः परिच्छेद इत्यनुयोक्तव्याः। निर्विकल्पविषयानपेक्षोऽर्थान्तरगोचरो विकल्प इत्येवं पुनराचक्षाणास्ते प्रमाणममुमामनेयुरप्रमाणं वा? आद्ये प्रत्यक्षातिरिक्तस्य अव्यभिचारिलिङ्गसमुत्थत्वाभावेनाऽनुमानपदवीं परिजहतस्तस्य प्रमाणान्तरत्वप्रसङ्गः। अप्रामाण्ये तु कस्तद्गृहीतायां व्याप्तौ समाश्वासः। तर्कयामीति विलक्षणानुभवसद्भावाच्चाभ्युपेयस्तथाभूतो ज्ञानविशेषः।

यदवोचाम—

तर्कार्थग्रहणं विकल्पकधिया पाश्चात्ययाऽध्यक्षतो
मेनानो निगदेद् विकल्पमतिः सा स्यात्तु प्रमा वाऽप्रमा।

षण्ढाद्दारकदोहदस्तु चरमे प्राच्ये समक्षानुमा-
मानार्थान्तरमानमापतितवत्तत्तर्क आश्रीयताम्, ॥ १ ॥

एतस्य च तर्कस्य न केवलानुमानौपयिकसम्बन्ध एव ग्रहीतव्ये सामर्थ्यमपि तु वाच्यवाचकभावेऽपि तस्यैव सकलशब्दार्थगोचरत्वात्, प्रयोजकवृद्धोक्तमाकर्ण्य प्रवृत्तवतः प्रयोज्यवृद्धस्य चेष्टां समीक्ष्य तत्कारणज्ञानजनकतां शब्देऽवधारयतोऽन्त्यावयवश्रवणपूर्वावयवस्मरणोपजनितवर्णपदवाक्यविषयसङ्कलनात्मकप्रत्यभिज्ञानवदावापोद्वापाभ्यां सर्वव्यक्त्युपसंहारेण वाच्यवाचकभावप्रतीतिदर्शनादिति ।

तर्कलक्षणशून्यस्तद्वदाभासमानोऽसत्यामपि व्याप्तौ तत्प्रत्ययस्तर्काभासः; यथा स श्यामो मैत्रपुत्रत्वादित्यत्र यावान्मैत्रपुत्रः स श्याम इति ॥ ५ ॥

अथाऽनुमानस्वरूपमालपति—

## साधनात् साध्यज्ञानमनुमानम् ॥ ६ ॥

वक्ष्यमाणलक्षणाद् दृष्टादुपदिष्टाद्वा साधनाद् वक्ष्यमाणलक्षणस्य साध्यस्य ज्ञानं प्रमाणसामान्यस्वरूपयथार्थज्ञानानुसन्धानाद् यथार्थज्ञानात्मकमनु साधनग्रहण व्याप्तिस्मरणयोः पश्चान्मीयते परिच्छिद्यतेऽनेनेत्यनुमानमिति ।

यत्त्वाहुर्लिङ्गपरामर्शोऽनुमानमिति, तदसत्; लिङ्गपरामर्शस्य अनुमानप्रमाणस्वरूपलाभे करणत्वात्, यथा खल्वनुभवः स्मरणे, अनुभव-स्मृती च प्रत्यभिज्ञाने, अनुभव-स्मरण-प्रत्यभिज्ञानानि च साध्य-साधनविषयाणि तर्के करणं तथैव लिङ्गज्ञानमपि व्याप्तिस्मरणसहकृतमनुमाने करणमेव न पुनरनुमानम्; अनुमानं तु परोक्षार्थज्ञानमेव तस्यैव तदव्युत्पत्तिविच्छेदसामर्थ्यात् साधनज्ञानस्य साधनाव्युत्पत्तिविच्छेदमात्रोपक्षीणत्वेन साध्याज्ञाननिवर्तकत्वाऽयोगात्; उक्तं च, "साधनात् साध्यविज्ञानमनुमानं विदुर्बुधाः",

इति । अर्थापत्तिरप्यत्रैवान्तःपतन्ती नार्हति प्रमाणान्तरीभावितुम् । तथाहि– यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतम् । जीविनो गृहासत्त्वं च प्रत्यक्षादिनाऽवधारितम् । तत्र जीवित्वविशिष्टं गृहासत्त्वं बहिःसत्त्वमन्तरेणानुपपद्यमानं बहिःसत्त्वं गमयति । नातः पराभिमतार्थापत्तिविषयोऽनुमानेनैव सिद्धेरर्थापत्तिप्रमाणान्तरानुविधायी । जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यथानुपपद्यमानत्वनिर्णये गृहसत्त्वबाधे परिशेषबहिःसत्त्वस्यानुमानेन परिच्छेदात् । एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वाधिगमाद् भोजनसिद्धौ दिवाभोजनबाधे पारिशेष्याद् रजनीभोजनसिद्धिः । निर्णीतान्यथानुपपत्त्येकलक्षणलिङ्गप्रभवं संवेदनं ह्यनुमानमिष्यते । न चैतद्रूपमेतन्नार्हति भवितुम् । नातो विषयान्तराभावेन प्रमाणान्तरकक्षीकारः क्षेमकार इति ॥ ६ ॥

इदानीं स्वार्थपरार्थभेदेन द्विविधेऽनुमाने स्वार्थमनुमानं प्रदर्शयति—

## तत् स्वार्थम् ॥ ७ ॥

तत् साधनात् साध्यज्ञानं स्वस्य साध्यपरिच्छेदलक्षणोऽर्थः प्रयोजनमनेनेति स्वार्थमनुमानम् । ननु केयं वाचोयुक्तिः ?। न हि सामान्यलक्षणमात्रानुपाती तद्विशेषो विशेषत्वभङ्गप्रसङ्गात् ; न खलु घटसामान्यसामग्रीमात्रप्रभवत्वं तद्विशेषस्याऽनुभवपथाध्वनीनम् । एवं च प्रमाणसामान्यतद्विशेषयोरनुमानसामान्यतद्विशेषयोर्वा लक्षणसाम्यं कथं न्यायसहमिति चेत् ?। सत्यम्, एष पुनः परमार्थः साधनप्रयोगाद्यनपेक्षभावेन स्वयमेव समवधारिताद् अविनाभावरूपेण साधनात् साध्यज्ञानं स्वार्थानुमानम्, परप्रयुक्तहेतुना समवगतात्साधनात् साध्यज्ञानं परार्थानुमानम् । अनुमानसामान्यलक्षणं तु अवधारणसामान्यविषयात् साध-

नात् साध्यज्ञानम् । एवं च न कश्चिद्दोषः । ननु सूत्रतस्तावन्नायमर्थोऽधिगम्यते इति चेत्; सत्यम् । किन्तु "हेतोः परार्थम्" इति सूत्रेण साधनप्रयोगसमुत्थसाध्यज्ञानस्य परार्थानुमानतया वक्ष्यमाणत्वेनेह तद्विपरीतं स्वयमेवोपलब्धसाधनात् साध्यज्ञानस्वरूपं स्वार्थानुमानं लभ्यते इति कोऽनुपपत्त्यवकाशः ?। तथाहि—धूम-धूमध्वजयोर्गृहीतव्याप्तिकेन पुंसा क्वचिदरण्यं गतवता क्वापि धराधरे धूमशिखामविच्छिन्नमूलामालोक्य स्मृत्वा चाऽविनाभावं तयोः स्वयमेवावधार्यते "भवितव्यमिह पर्वते चित्रभानुना" इति, तदेवं लिङ्गदर्शनप्रतिबन्धप्रतिसन्धानसमुत्थः परोक्षार्थनिर्णयो हेत्वाद्यनपेक्षः स्वार्थानुमानमिति ॥ ७ ॥

अथाऽनुमानौपयिकीं व्याप्तिमाह—

## अन्यथानुपपत्तिर्व्याप्तिः ॥ ८ ॥

अन्यथा साध्यं विना अनुपपत्तिरेव न मनागप्युपपत्तिर्यत्र सा तन्निष्ठा व्याप्तिः, अन्यथा प्रयत्नानन्तरीयकत्वे साध्ये विपक्षैकदेशवृत्तेरनित्यत्वस्याऽपि गमकत्वापत्तेः । वह्निं विना धूमस्यानुपपत्तेर्वह्निमत्येव धूमोपपत्तेर्वह्निनिरूपिताऽन्यथानुपपत्तिलक्षणा व्याप्तिर्धूमे वर्त्तत इति तादृशव्याप्त्याश्रयत्वाद् धूमस्य व्याप्यत्वं तादृशव्याप्तिनिरूपकत्वाद् वह्नेर्व्यापकत्वम् । अयमेव च व्याप्यव्यापकभावपदार्थः, एवं च व्याप्यस्य सद्भावे व्यापकेनाऽवश्यं भवितव्यं व्यापकसद्भाव एव च व्याप्येन भवितव्यमित्येष व्याप्य-व्यापकयोर्नियमो निरगालीत् ।

उक्तं च—

"लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत्पुनः ।
नियमस्य विपर्यासे सम्बन्धो लिङ्गलिङ्गिनोः" ॥ १ ॥

प्रतिबन्धोऽविनाभाव इत्यादि नामान्तरमेवाऽस्या इति ॥८॥

इदानीमुक्तलक्षणव्याप्तिरूपनियमस्य द्विप्रकारीं प्रबोधयति—

## सह-क्रमभावनियमः सः ॥ ९ ॥

सः, अन्यथानुपपत्तिलक्षणो व्याप्त्यपरपर्यायो नियमो द्विप्रकारः सहभावनियमः क्रमभावनियमश्चेति ॥ ९ ॥

तत्र सहभावनियममभिधत्ते—

## आद्यः सहचारिणोर्व्याप्यव्यापकयोश्च ॥१०॥

आद्यः सहभावनियमः सहचारिणोरेकसामग्र्यधीनयोः फलादिगतयो रूप-रसयोर्व्याप्यव्यापकयोः शिंशपात्व-वृक्षत्वयोश्चेति ॥ १० ॥

अथ क्रमभावनियमं द्योतयति—

## पूर्वोत्तरभाविनोः कार्यकारणयोश्च चरमः ॥ ११ ॥

चरमोऽन्तिमः क्रमभावनियमः पूर्वोत्तरभाविनोः कृत्तिकोदय-शकटोदययोः कार्यकारणयोर्धूम-धूमध्वजयोश्चेति ॥११॥

उक्ता व्याप्तिः। साधनं कः पदार्थः ? । अत्राह—

## तद्वत्त्वेन निश्चितं साधनम् ॥ १२ ॥

साध्यते गम्यते परोक्षार्थोऽनेनेति साधनं लिङ्गमित्यर्थः, तदेव लक्ष्यं परिशेषं लक्षणम्। तत्पदेन व्याप्तिपरामर्शः, व्याप्तिमत्त्वेन अविनाभावित्वेन निश्चितं सम्यगवधारितं साधनमुच्यते। न हि योग्यतया साधनं परोक्षार्थप्रतिपत्तेरङ्गं भवति यथा बीजमङ्कुरस्य, अदृष्टादपि धूमाद् धूमध्वजप्रत्ययोदयापत्तेः, नापि स्वरूपमात्रनिश्चयगोचरं यथा प्रदीपः कलशादेः, अनवधारितप्रतिबन्धस्याऽपि धूमदर्शनात् तत्प्रसक्तेः, तस्मात्परोक्षार्थाविनाभावित्वरूपेणैव सम्यग्निर्णयपथाध्वनीनं साधनं

तदनुमापने प्रत्यलमित्येतदेव अविनाभावित्वमेकं हेतुलक्षण-भावेन समुत्सहिष्णु समवस्थातुम् । पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिरिति त्रैरूप्यं हेतोर्लक्षणमिति सौगताः, अबाधितविषयत्वमसत्प्रतिपक्षत्वं तानि त्रीणि चेति पाञ्चरूप्यं हेतोर्लक्षणमिति यौगाः, तथाहि– पर्वतो वह्निमान् धूमादत्र धूमस्य पक्षधर्मत्वं सपक्षे महानसादौ च सत्त्वं विपक्षह्रदादितो व्यावृत्तत्वं चाऽस्ति अबाधितविषयत्वं च प्रत्यक्षादिकाऽबाध्यसाध्यकत्वमपि तत्र विद्यत एव । असत्प्रतिपक्षत्वं च साध्यविपरीतार्थोपस्थापकानुमानरहितत्वममुष्य नासम्भवमिति । सोऽयमभ्युपगमो न रमणीयः, एकेनैवाऽविनाभावरूपेण सिद्धत्वात् त्रैलक्षण्यादेरनुपयोगात्, यदि ह्यविनाभावरूपं साध्यसिद्धिधुराधौरेयमेकं विजृम्भते किमन्यत्रैलक्षण्यादिसत्त्वासत्त्वाभ्याम् ?। यदि च न तथा एवमपि किमन्यत्रैलक्षण्यादि सत्त्वासत्त्वाभ्याम् ? ।

तदुक्तम्–

"अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम् ।
नाऽन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ? ॥ १ ॥
अन्यथाऽनुपपन्नत्वं यत्र किं तत्र पञ्चभिः ।
नाऽन्यथाऽनुपपन्नत्वं यत्र किं तत्र पञ्चभिः ?" ॥२॥ इति

न च तथाविधं हेतुत्वाभिमतं किञ्चिदालक्षितं यत्राऽविनाभावलक्षणं न चकास्यात्; न वा कश्चिदसिद्धो वा विरुद्धो वा व्यभिचारी वा कालातीतो वा प्रकरणसमो वा हेत्वाभासो विद्यते यत्र ह्यविनाभावलक्षणकम्रकामिनीपरिरम्भवान्धुर्यं स्यादालोकविषयः । एवं च सर्वहेत्वनुगतमहेतुव्यावृत्तमविनाभावलक्षणं हेतोर्लक्षणत्वेन कः सुधीर्नोपासीत ?। ननु अविनाभावमात्रलक्षणत्वेऽपक्षधर्मत्वस्याऽपि हेतुत्वमासज्येतेति चेदासज्यतां को दोषः ?, इष्टमेव हि तत्र हेतुत्वं प्रकाशेत यदि तत्राऽविनाभावः, अविनाभावाभावे तु त्रिभिः पञ्चभिर्वा पक्षधर्मत्वादिभिर्न कि-

ञ्चित् । नन्वस्ति तथाविधमपि स्थलं यत्र त्रिभिः पञ्चभिर्वा तैः परिरम्भेऽपि अविनाभावो नावकाशेत ?; अस्त्येव, तथाहि– स श्यामो मैत्रपुत्रत्वादिति अस्ति खल्विह तत्पदाभिधेयगर्भस्थमैत्रपुत्रे हेतुसद्भावः, सपक्षेष्वपि श्यामत्वेन सम्प्रतिपन्नेषु दृश्यमानेषु पञ्चसु मैत्रपुत्रेषु मैत्रपुत्रत्वसद्भावः, अश्यामेभ्यस्तदितरेभ्यो मैत्रपुत्रत्वव्यावर्तनाद्विपक्षाद् व्यावृत्तिरप्यस्ति, विषयबाधाभावादबाधितविषयत्वमप्यस्ति, प्रतिकूलसमबलप्रमाणाभावादसत्प्रतिपक्षत्वमप्यस्ति, न पुनरयं हेतुत्वेन कस्याप्यभ्युपगमविषयः । ननु नात्र विपक्षाद् व्यावृत्तिर्निश्चिताऽस्ति, न हि श्यामत्वासत्त्वे तत्पुत्रत्वेनावश्यं निवर्त्तनीयमित्यत्रास्ति प्रमाणमिति चेद् हन्त ! तर्ह्यमुमेवान्यथानुपपत्तिं शरणीचक्राणः पुनस्तामेव लक्षणत्वेन गर्हयसि ?। अनौपाधिकसम्बन्धस्य व्याप्तित्वं व्याजह्राणा यौगा अपि तत्पुत्रत्वे शाकाद्याहारपरिणामाद्युपाधिनिबन्धनत्वात् तादृशव्याप्तेरभावोद्भावनेन विपक्षा सत्त्वासम्भवमावेदयन्तः परमार्थतो निश्चितान्यथानुपपत्तिमेव हेतोर्लक्षणं प्रत्यपद्यन्त, न ह्यनौपाधिकसम्बन्धे सति किञ्चिदवशिष्यते यदपोहाय शेषलक्षणमाचक्षाणास्ते शोभेरन् ।

ननु पक्षधर्मत्वाभावे महानसीयधूमोऽपि पर्वतीयानलमनुमापयतु ?, नन्वेवं तद्भावेऽपि तस्य तद्गमकतायां को निरोधकः ?। ननु महदेतत्कुतूहलम् : कथं हि नाम पक्षधर्मत्वाङ्गीकारे रसवती धूमो धराधरीयधूमध्वजं गमयितुमधीशीत ?, इति चेत् । क्षिप्तस्तर्हि जलचन्द्रस्य नभश्चन्द्रज्ञापकत्वे कुठारः, न ह्यसौ पक्षधर्मत्वाश्रयो जलधर्मत्वात् । न च जलनभश्चन्द्राऽन्तरालवर्त्तिनस्तावत एकदेशस्य धर्मित्वेन जलचन्द्रस्य तद्धर्मत्वं सूपपादमिति पेशलम् । एवं तर्हि रसवतीपर्वतान्तरालवर्त्तिवसुन्धराप्रदेशस्य धर्मित्वे महानसीयधूमस्याऽपि तद्धर्मत्वोपपत्तेः पर्वतीयधनञ्जयज्ञापकत्वमापद्येत, पक्षधर्मता खलूभयत्रापि निमित्तं ततो यथाऽसौ स्वसमीपदेशे

धूमस्य धूमध्वजमनुमापयतश्चकासदास्ते तथा व्यवहितदेशेऽपि पर्वतादौ तदवस्थैव, इतरथा जलचन्द्रेऽप्यसौ कथं स्यात् ?; देशव्यवधानात्, अथ नेयमेवाऽत्र गमकत्वाङ्गं किन्तु कार्यकारणभावोऽपि। कार्यं च किमपि कीदृशं भवति, तदिह धूमध्वजः स्वसमीपप्रदेशमेव धूमं जनयितुमधीशानः, नभश्चन्द्रस्तु व्यवहितदेशमपि, नाऽतो महानसधूमो महीधरकन्धराकोणचारिणमाशुशुक्षणिमनुमापयतीति चेत्। नन्वेवं धूमस्तद्देशेनैव पावकेनान्यथानुपपन्नः, जलचन्द्रमाः पुनरतद्देशेनाऽपि गगनेन्दुना इत्यन्यथानुपपत्तिमात्रनिर्णयसद्भावादेव साध्यसिद्धेः सम्भवात् कृतं जलाम्बरजैवातृकमण्डलान्तरालादेर्धर्मित्वपरिकल्पनाकदर्थनमात्रनिमित्तेन पक्षधर्मतोपवर्णनेन।

सपक्षसत्त्वमप्यनौपयिकमेव, सत्त्वादेरगमकत्वापत्तेः। न च पक्षाद् बहिष्कृत्य किमपि कुटादि दृष्टान्तीकर्तुं युक्तं कुटादेरपि पटादिवद् विवादास्पदत्वेन पक्षाद् बहिष्करणाऽनुपपत्तेः, तथा च कथमयं निदर्शनतया शक्य उपदर्शयितुम् ?। प्रमाणान्तरात् तत्रैव क्षणिकं प्राक् प्रसाध्य निदर्शनतयोपादानं भविष्यतीति चेत्। ननु तत्रापि कः सपक्षीकरिष्यते ?। यदि क्षणिकत्वप्रसाधनपूर्वं पदार्थान्तरमेवेति चेत्, दुर्वारमनवस्थादौस्थ्यम्। अन्यथा तु न सपक्षः कश्चित्, यत एव च प्रमाणात् क्षणिकत्वनिष्टङ्कनं कुटे प्रकंस्यते तत एव पटादावपि प्रकंस्यतां पर्याप्तमपरप्रमाणोपन्यासालीकप्रागल्भीप्रकटनेन। ननु पक्षधर्मत्वानभ्युपगमे धवल एष प्रासादः काकस्य कालिम्न इत्यादेरपि हेतुत्वानुषङ्ग इति चेत्, उक्तोत्तरत्वादविनाभावबलेनैव साध्यानुमानोदयात् तत्र च तदभावात्, न हि प्रासादीयधवलिम्न्येव श्यामिका काकीयोपपत्तिमतीत्यस्ति नियमः, पक्षधर्मत्वाभ्युपगमे च शकटं मुहूर्तान्ते उदेष्यति कृत्तिकोदयात्। भूमेरुपरि सविता आलोकादित्याद्यावालगोपालप्रसिद्धानुमाना-

नि नोपपद्येरन् । केवलान्वयि-केवलव्यतिरेकि-अन्वयव्यतिरेकि चेति त्रिविधं साधनं प्रोचिवांसः कणभक्षाक्षचरणीयाश्चान्वयव्यतिरेकिण्येव पाञ्चरूप्यमुपयन्ति केवलान्वयिनि तु विपक्षासत्त्वासम्भवात् केवलव्यतिरेकिणि च सपक्षसत्त्वाऽसम्भवात् चातूरूप्यमेव यदाह– शङ्करमिश्रः "केवलान्वयिनि, विपक्षासत्त्वस्य केवलव्यतिरेकिणि सपक्षसत्त्वस्य, गमकत्वौपयिकत्वाभावात्" इति, तथा च न तन्मते सर्वहेतुव्यापकमनतिप्रसक्तं किञ्चिल्लक्षणं हेतोः प्रेक्ष्यते अबाधितविषयत्वं तु हेतोर्लक्षणं भवत्येव न, बाधितविषयत्वस्य हेत्वाभासत्वाङ्गत्वाभावात् साध्यस्य बाधितत्वे हेतोः किमायातं, येन तद्दोषेणाऽयमपि दोषी स्यात्; न हि नामाऽन्यदोषेणाऽन्यस्य दुष्टता, अतिप्रसङ्गात् ।

ननु तर्हि बाधितस्थले हेतुः सम्यगेवावतिष्ठते ?। ननु क एवमाह ?, साध्यदोषेण तु दुष्टत्वं तस्य प्रत्याख्यायते, ननु दुष्टत्वप्रत्याख्याने प्राप्तमेव सम्यक्त्वम् ?। न; साध्यदोषेण दुष्टत्वाऽभावेऽपि स्वलक्षणाविनाभावाभावमहिम्ना तत्र दुष्टताया अवस्थानात्; तथा च नाऽबाधितविषयत्वं हेतोर्लक्षणं सम्भवति, अविनाभाविहेतुस्थले नियमेन बाधितसाध्यानवकाशात्, अविनाभावेनैवाबाधितविषयत्वस्य सङ्ग्रहोपपत्तेश्च तथाहि– वह्निरनुष्णः कृतकत्वाद् घटवदित्यत्र प्रत्यक्षबाधितसाध्यानन्तरप्रयुक्तत्वं हेतोः, सुरा ब्राह्मणेन पेया द्रवत्वान्नीरवदित्यत्र चागमबाधितसाध्यानन्तरप्रयुक्तत्वं हेतोः, न पुनरत्राऽनुष्णत्वेन कृतकत्वस्य पेयत्वेन द्रवत्वस्य वा समस्त्यविनाभावः, एवमविनाभाविहेतुस्थले सत्प्रतिपक्षत्वस्याऽपि कोऽवकाशः?। न हि सम्भवति परमार्थतोऽवितथे साध्यहेत्वोरविनाभावे सति साध्यविपरीतार्थोपस्थापकानुमानावतारः, अवतारे वा प्रतिहतस्य प्रवक्तुरेव मन्दिमा न पुनर्वस्त्वसत्, तुल्यबलसाध्यतद्विपर्ययसाधकहेतुद्वय-

रूपे चास्मिन् प्रकृतसाधनयोरविनाभावनिर्णयाऽभावादेव हेत्वाभासत्वेन निर्णीताविनाभावलक्षणेनैवाऽसत्प्रतिपक्षत्वस्याऽपि संग्रह इति त्रैरूप्ये पाञ्चरूप्ये वा विपक्षेऽसत्त्वमेव निर्णीतं निर्णीताविनाभावस्वरूपमेकं हेतुलक्षणौचित्येनावशिष्यते । शेषं तु द्वयं चतुष्टयं वाऽन्यथासिद्धत्वाद् व्यभिचारिभावमास्कन्दत् हेतुलक्षणपदं समलंकरोति । तत्स्थितमेतन्निर्णीताविनाभावैकलक्षणो हेतुर्न तु त्रिलक्षणकादिरनस्य हेत्वाभासस्यापि सम्भवादिति ॥ १२ ॥

अथ साधनं विभजते—

## विधिप्रतिषेधाभ्यां द्विविधम् ॥१३॥

साधनमिति वर्तते । तद् द्विविधं विधिसाधनं प्रतिषेधसाधनं च तत्र सदंशो विधिः, असदंशः प्रतिषेधः, स च चतुर्द्धा-प्रागभावः, प्रध्वंसाभावः, अन्योन्याभावः, अत्यन्ताभावश्चेति । तत्र यन्निवृत्तावेव कार्यसमुद्भवः सोऽस्य प्रागभावः, यथा मृत्पिण्डनिवृत्तावेव समुद्भवतः कलशस्य मृत्पिण्डः, न चाऽत्र तमोनिवृत्तावेव रूपज्ञानोद्भवः, येन तमसोऽपि तत्प्रति समुचितः प्रागभावत्वप्रसङ्गावतारः, नक्तञ्चरादावतीन्द्रियदर्शिनि च तद्भावेऽपि तद्भावात् । यदुत्पादे कार्यस्य नियमेन विपादः सोऽस्य प्रध्वंसाभावः, यथा कपालकदम्बकोत्पादे नियमतो विपाददशामायातो कुम्भस्य कपालकदम्बकम् । स्वरूपान्तरात् स्वरूपव्यवच्छेदोऽन्योन्याभावः, यथा पटस्वभावाद् घटस्वभावव्यावृत्तिः । कालत्रयापेक्षिणी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभावः, यथा चेतनाऽचेतनयोरिति ॥ १३ ॥

तद् द्विविधमपि विधिप्रतिषेधस्वरूपं साधनं पुनः प्रकारतः प्रकाशयति—

## तदपि विधिनिषेधसाधक-

## त्वेन द्विधा ॥ १४ ॥

तदपि द्विविधमपि प्रोक्तं विधिप्रतिषेधाभ्यां साधनं द्विधा द्विभेदमित्यर्थः। विधिनिषेधसाधकत्वेनेति, विधिरूपसाध्यसाधकत्वेन निषेधरूपसाध्यसाधकत्वेन च। विधिस्वरूपं साधनं द्विविधं प्रतिषेधस्वरूपं साधनं च द्विविधं भवतीतिभावः ॥१४॥

तत्रापि विधिसाधकं विधिस्वरूपं साधनं पुनर्विभागतो व्याहरति–

## विधिसाधकं विधिरूपं व्याप्य-कार्य-कारण-पूर्वो-त्तर-सहचरैः षोढा ॥१५॥

तत्र व्याप्यं यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वात्; कृतकत्वात्; श्रावणत्वाद् वा। ननु श्रावणत्वस्याऽसाधारणत्वात् कथं व्याप्तिसिद्धिरिति चेत्?; विपर्यये बाधकप्रमाणबलादेवेति ब्रूमः, कथमन्यथा सत्त्वहेतुस्तावकीनः क्षणिकत्वप्रसाधनप्रयुक्तस्तव धियां साधीयस्तां दधीत?। यद्यपि व्याप्यो हेतुः सर्व एव भवति तथापि तद्व्याप्यत्वं नेह विवक्षयामास किन्तु साध्येन तदात्मीभूतस्याकार्यादिरूपस्य प्रयत्नानन्तरीयकत्वादेः स्वरूपमित्यदोषः वृक्षोऽयं शिंशपात्वादित्यादेरप्यत्रैवान्तर्भावः; स्वभावहेतुरप्ययमेव वेदितव्यः।

कार्यं यथा– पर्वतोऽयमग्निमान् धूमादिति अत्र धूमो वह्नेः कार्यभूतस्तदभावेऽनुपपद्यमानस्तं गमयति। कारणं यथा– वृष्टिर्भविष्यति विशिष्टमेघाऽन्यथानुपपत्तेः, अत्र मेघविशेषो वर्षस्य कारणं स्वकार्यभूतं वर्षं गमयति; ननु कार्याभावेऽपि सम्भवत्कारणं कथं कार्यगमकं स्यादिति चेत्?। सत्यम्, न हि वयमपि यस्य कस्यचित् कारणस्य साधनभावमाचक्ष्महे किन्तु न यस्य मन्त्रादिना सामर्थ्यप्रतिबन्धो न वा कारणान्तरवैकल्यम्।

तत्कुतो ज्ञायते इति चेत् ?; अस्ति खलु विगुणादितरस्य विशेषः, तत्परिज्ञानं तु प्रायः पांशुलपादानामप्यस्ति ।

यदूचुः—

"गम्भीरगर्जितारम्भनिर्भिन्नगिरिगह्वराः ।
त्वङ्गत्तडिल्लतासङ्गपिशङ्गोत्तुङ्गविग्रहाः ॥ १ ॥
रोलम्बगवलव्यालतमालमलिनत्विषः ।
वृष्टिं व्यभिचरन्तीह नैवंप्रायाः पयोमुचः" ॥ २ ॥ इति ।

अपि च रसादेरेकसामग्र्यनुमानेन रूपानुमानमभिवाञ्छता न्यायवादिनेषाण एव कारणस्य साधनभावः ।

यद्भमाण—

"एकसामग्र्यधीनस्य रूपादे रसतो गतिः ।
हेतुधर्मानुमानेन धूमेन्धनविकारवत्" ॥ १ ॥ इति ।

पूर्वचरं यथा— उदेष्यति शकटं कृत्तिकोदयस्य तथैवोपपत्तेः, अत्र कृत्तिकोदयानन्तरं मुहूर्त्तान्ते नियमेन शकटमुदेतीति कृत्तिकोदयः पूर्वचरो हेतुः शकटोदयमनुमापयति । उत्तरचरं यथा— प्रागुदगमद्भरणिः कृत्तिकोदयात्, अत्र कृत्तिकोदयो भरण्युदयोत्तरचरस्तं गमयति । पूर्वोत्तरचरयोश्च न स्वभावरूपत्वं न वा कार्यकारणभावः कालव्यवहितौ तयोरनुपलब्धेरिति स्वभावकार्यकारणेभ्यः पार्थक्येन निर्देशः । सहचरं यथा— मातुलिङ्गं रूपवद्भवितुमर्हति, रसवद्भावान्यथानुपपत्तेः । अत्र रसो नियमेन रूपसहचरितस्तदभावेऽनुपपत्तिकस्तदनुमापयति । सहचारिणोश्चान्योन्यस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः, सहोत्पादेन तदुत्पादविपादाच्च न सहचरहेतुः पूर्वोक्तस्वभावकार्यकारणेष्वन्तर्भूण्णुः, इत्येवं विधिस्वरूपसाध्यसाधकानि विधिस्वरूपाणि व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचरभेदात् षट्प्रकाराण्यविरुद्धोपलब्धिर्नामान्तराणि साधनान्युपवर्णितानि ॥ १५ ॥

अथ निषेधरूपसाध्यानुमापकं विधिस्वरूपं साधनं सप्तभिः प्रकारैराख्याति—

## निषेधसाधकं विरुद्धस्वभावव्याप्या- दितः सप्तधा ॥ १६ ॥

विधिरूपमिति वर्त्तते। निषेधसाधकं विधिस्वरूपं साधनं सप्तधा निषेधनीयार्थेन विरुद्धभावमाबिभ्राणाः स्वभावव्याप्य-कार्यकारणपूर्वचरोत्तरचरसहचराः सप्त निषेधप्रतिपत्तिप्रवणाः साधनभावेन वेदितव्याः। तत्र विरुद्धस्वभावं साधनं यथा—नास्त्येव सर्वथैकान्तोऽनेकान्तस्योपलब्धेः, अत्र प्रतिषेधनीयोऽर्थ एकान्तरूपस्तस्य विरुद्धस्वभावमनेकान्तत्वम्। व्याप्यादिषु प्रतिषेध्यविरुद्धत्वं पारम्पर्येण द्रष्टव्यम्। तथाहि—नास्त्यत्र पुंसस्तत्त्वेषु निश्चयस्तत्र सन्देहात्। अत्र तत्त्वनिश्चयेन साक्षाद् विरुद्धस्तदनिश्चयः तद्व्याप्यः सन्देहः। प्रतिषेध्यार्थविरुद्ध-कार्यं यथा न विद्यतेऽस्य क्रोधाद्युपशमो वदनविकारादेः, अत्र प्रतिषेध्यार्थः क्रोधाद्युपशमस्तस्य विरोध्यनुपशमस्तस्य कार्यं वदनविकारादि। प्रतिषेध्यार्थविरुद्धकारणं यथा—नास्य मुनी-शितुरसत्यं वचोः राग-द्वेष-कालुष्याकलङ्कितज्ञानसम्पन्नत्वात्, अत्र प्रतिषेध्यार्थविरुद्धसत्यवचःकारणं हेतुः। प्रतिषेध्यार्थ-विरुद्धपूर्वचरं यथा—नोद्गमिष्यति मुहूर्तान्ते पुष्यतारा रोहिण्युद्ग-मात्, अत्र पुष्यतारोद्गमः प्रतिषेध्यस्तद्विरुद्धो मृगशीर्षोदय-स्तदनन्तरं पुनर्वसूदयस्यैव भावात् तत्पूर्वचरो रोहिण्युद्गमः। प्रतिषेध्यार्थविरुद्धोत्तरचरं यथा—नोदगमन् मुहूर्त्तात्पूर्वं मृग-शिरः पूर्वफल्गुन्युदयात्, अत्र प्रतिषेध्यार्थो मृगशिरउदय-स्तद्विरोधी मघोद्गमः, अनन्तरमार्द्रोदयादेरेव भावात् तदु-त्तरचरः पूर्वफल्गुन्युदयः। प्रतिषेध्यार्थविरुद्धसहचरं यथा—नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनात्, अत्र प्रतिषेधनीयमिथ्या-

ज्ञानविरोधिसम्यग्ज्ञानसहचरं सम्यग्दर्शनम् । इत्येवं निषेधावबोधधुराधौरेयाणि विरुद्धस्वभावव्याप्यकार्यकारणपूर्वचरोत्तरचरसहचरभेदात् सप्तप्रकाराणि विधिरूपाणि विरुद्धोपलब्धिनामान्तराणि परिदर्शितानि ॥ १६ ॥

व्याख्यातं विधिरूपं साधनम् । अथ प्रतिषेधरूपं साधनं व्याजिहीर्षुस्तावत्प्रथमं विधिसाधकं तदाह—

## विधिसाधकं प्रतिषेधरूपं विरुद्धस्वभाव-व्यापक-कार्य-कारण-सहचराऽभाव-भेदात् पञ्चधा ॥ १७ ॥

विधेयार्थविरुद्धस्वभावव्यापककार्यकारणसहचराभावभेदात् पञ्चविधं प्रतिषेधरूपं साधनं विधिसाधननिपुणं भवति । तत्र विधेयार्थविरुद्धस्वभावाभावरूपं प्रतिषेधसाधनं यथा— वस्तुजातमनेकान्तात्मकमेकान्तस्वभावस्योपपत्तिपथानवलम्बिभावेनाऽभावात् । अत्र अनेकान्तात्मकत्वविधेयार्थविरुद्धस्वभावैकान्ततत्त्वाभावो विरुद्धस्वभावाभावहेतुः । व्यापकाभावो यथा— अस्त्यत्र च्छाया औष्ण्यानुपलब्धेः, अत्र विधेयार्थच्छायाविरुद्धतापस्य व्यापकमौष्ण्यं तदभावो व्यापकाभावहेतुः । कार्याभावो यथा— अस्ति खल्वत्र प्राणभृति व्याधिविशेषो निरामयचेष्टाऽदर्शनात्, अत्र व्याधिविशेषलक्षणविधेयविरुद्धतदभावकार्यविशिष्टचेष्टाविरहः कार्याभावहेतुः । कारणाभावो यथा— अस्त्यत्र शरीरिणि कष्टमिष्टसंयोगाभावात् । अत्र कष्टरूपविधेयार्थविरुद्धसुखकारणेष्टसंयोगाभावः कारणाभावहेतुः । सहचराभावो यथा अस्त्यत्र मिथ्याज्ञानं सम्यग्दर्शनाऽदर्शनात् । अत्र मिथ्याज्ञानलक्षणविधेयार्थविरुद्धसम्यग्ज्ञानसहचरसम्यग्दर्शनाभावः सहचराभावहेतुः, इत्येवंविधिस्वरूपसाध्यगमकानि प्रतिषेधरूपाणि

विरुद्धस्वभावव्यापककार्यकारणसहचरभेदात् पञ्चप्रकाराणि विरुद्धानुपलब्धिनामान्तराण्यावेदितानि ॥ १७ ॥

अथ प्रतिषेधप्रतिपत्तिप्रगुणं प्रतिषेधसाधनं ब्रूते—

**निषेधसाधकं स्वभाव-व्यापक-कार्य-कारण-पूर्वो-त्तर-सहचराऽभावभेदात् सप्तधा ॥१८॥**

प्रतिषेध्यार्थप्रतिषेधगमकं प्रतिषेधरूपं साधनं सप्तविधम्। तत्र स्वभावाभावरूपं यथा—नास्त्यत्र भूतले कुम्भ उपलब्धिलक्षणप्राप्तस्य तत्स्वभावस्यादर्शनात्, उपलब्धिर्ज्ञानं तस्य लक्षणानि कारणानि नेत्रादीनि तैर्ह्युपलब्धिर्लक्ष्यते जन्यते इति यावत् तानि प्राप्तो जनकत्वेनोपलब्धिकारणान्तर्भावात् स तथा दृश्य इत्यर्थस्तस्याऽदर्शनात्तु कुम्भाभावसिद्धिः, पिशाचादिभिर्व्यभिचारपरिहारार्थमुपलब्धिलक्षणप्राप्तस्येति विशेषणम्। व्यापकाभावो यथा— नास्त्यत्र प्रदेशे पनसः पादपाऽदर्शनात्, अत्र निषेध्यार्थपनसव्यापकपादपाभावो व्यापकाभावहेतुः। कार्याभावो यथा— नास्त्यत्राऽप्रतिबद्धसामर्थ्यो धनञ्जयः धूमाभावात्, अत्राऽप्रतिबद्धसामर्थ्यो धनञ्जयो यदि स्यात्तदाऽवश्यं धूमः स्यात्; धूमं प्रति ह्यप्रतिहतशक्तिके समुज्ज्वलति चित्रभानौ नियमेन भवनीयं धूमेनेति धूमलक्षणकार्याभावाद् विशिष्टकारणाभावो गम्यते इति विशिष्टकारणाभावं प्रति कार्याभावस्य गमकत्वं भवत्येव तदविनाभावित्वात्तस्य। कारणमात्रं तु कार्याभावेऽपि वर्वर्त्ति यथोष्णाऽयोगोलकेऽनलो धूमाभावे, नातस्तस्य तद्गमकत्वम्। कारणाभावो यथा— नात्र समस्ति धूमो धूमध्वजाभावात् कारणाभावे हि कार्यं नियमेन नोदेतीति सुपरीक्षिते कारणाभावे कार्याभावो निर्णीयत एव। पूर्वचराभावो यथा— न भावि मुहूर्त्तान्ते शकटं कृत्तिकोदयाभावात्। उत्तरचराभावो यथा नोदगाद्भरणिर्मुहूर्तात्प्राक्

तत एव । सहचराभावो यथा– नास्त्यत्र समतुलायामुन्नामः, नामानुपदर्शनात्, इत्येवं प्रतिषेधसाधनानि प्रतिषेधसाधनानि स्वभाव-व्यापक-कार्य-कारण-पूर्वचरो-त्तरचर-सहचरभेदात् सप्त-प्रकाराणि अविरुद्धाऽनुपलब्धिनामान्तराणि निवेदितानि ॥१८॥

उक्तं साधनम् । अथ साध्यस्वरूपमाह–

## अबाधिता-ऽभिमता-ऽनाधिगतं साध्यम् ॥१९॥

अबाधितत्वमभिमतत्वमनधिगतत्वमितित्रैरूप्यविशिष्टं साध्यम् । तत्र प्रत्यक्षादिबाधाशून्यत्वमबाधितत्वम् ; अनेन वह्निधर्मिकानुष्णत्वादेः साध्यत्वव्युदासः । अभिमतत्वं च सिसाधयिषाविषयत्वम् ; अनेन शब्दधर्मिकसर्वथानित्यभावादेः साध्यत्वनिरासः, अनिष्टं हि जैनस्य सर्वथा नित्यत्वं शब्दे इति नेदं सिसाधयिषाविषयः । अनधिगतत्वं पुनरानिश्चितत्वम् ; तेन संशय-विपर्यया-ऽनध्यवसायाऽवलम्बितार्थस्य साध्यत्वप्रतिपत्तिः । एवम्भूतस्यैवार्थस्य हि साध्यत्वं सङ्गच्छते, निर्णयैकपदीमवतीर्णस्य का नाम साध्यता ? । यदाह– भाष्यकारो वात्स्यायनः " नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते किन्तर्हि संशयितेऽर्थे" इति ॥ १९ ॥

इदानीमनुमेयधर्मविशिष्टो धर्मी साध्यमनुमेयधर्मो वेत्यारेकामपाकर्तुमाह–

## तदनुमेयधर्मविशिष्टो धर्मी पक्षः क्वचिदनुमेयधर्मः ॥ २० ॥

तदित्युक्तलक्षणं साध्यम् । अनुमेयधर्मेण वह्न्यादिना विशिष्टो पर्वतादिर्धर्मी, एतच्चानुमानिकप्रतिपत्त्यवसरापेक्षातो बोद्धव्यम् । प्रतिनियतसाध्यधर्मविशेषणविशिष्टतया हि धर्मिणः साधयितुमिष्टत्वात् साध्यव्यपदेशः । पक्ष इति पर्याय एवा-

ऽस्य । ननु कथं धर्मी पक्षो धर्मधर्मिसमुदायस्य तत्त्वादिति चेत् ?। न, साध्यधर्मविशेषणविशिष्टतया धर्मिणः साधयितुमिष्टस्य पक्षाभिधाने दोषाभावात् । क्वचिदिति– व्याप्तिग्रहणसमये त्वनुमेयधर्मो वह्न्यादिः साध्यपदार्थः इतरथा व्याप्त्यनुपपत्तेः, न हि यत्र यत्र धूमस्तत्र तत्र पर्वतस्याप्यस्त्यनुवृत्तिरिति ॥२०॥

अथ धर्मी कीदृशः स्यादित्यत्राह—

## प्रमाण-विकल्पो-भयप्रसिद्धो धर्मी ॥२१॥

धर्मी तावत् त्रेधा; प्रमाणप्रसिद्धः, विकल्पप्रसिद्धः, तदुभयप्रसिद्धश्च । तत्र निश्चितप्रामाण्यकप्रत्यक्षाद्यन्यतमावधृतत्वं प्रमाणप्रसिद्धत्वम् । अनिश्चितप्रामाण्याप्रामाण्यप्रत्ययगोचरत्वं विकल्पप्रसिद्धत्वम् । तद्द्वयविषयत्वं प्रमाणविकल्पोभयप्रसिद्धत्वम् । तत्र प्रमाणप्रसिद्धो धर्मी यथा– धूमादग्नौ साध्ये पर्वतः; स खलु प्रत्यक्षप्रमाणेन प्रमीयते । विकल्पप्रसिद्धो यथा– समस्ति सर्वज्ञः सुनिश्चिताऽसम्भवद्बाधकप्रमाणत्वात्, इत्यत्र सर्वज्ञः; अथवा नास्ति खरविषाणमित्यत्र खरः; अत्र हि सर्वज्ञोऽस्तित्वसिद्धेः प्राग् न प्रत्यक्षादिप्रमाणासिद्धः, अपितु प्रतीतिमात्रसिद्ध इति विकल्पप्रसिद्धोऽयं धर्मी एवं खरविषाणमपि नास्तित्वसिद्धेः प्राग् विकल्पसिद्धमेव । उभयसिद्धो धर्मी यथा– शब्दः परिणामी कृतकत्वादित्यत्र शब्दः; स हि वर्त्तमानः प्रत्यक्षगम्यो भूतो भविष्यंश्च विकल्पगम्यः, इत्यसौ सर्वोऽपि धर्मीति प्रमाणविकल्पप्रसिद्धो धर्मीति त्रिधा धर्मीति व्यवस्थितम् ॥ २१ ॥

ननूक्तलक्षणसाध्यधर्मिणि कीदृशा साध्यधर्मेण भवनीयम् ? । अत्राह–

## विकल्पप्रसिद्धः सत्तेतरसाध्यः ॥ २२ ॥

विकल्पप्रसिद्धे धर्मिणि सत्ता अस्तित्वं साधनीयं

यथास्ति सर्वज्ञ इति । इतरद् नास्तित्वं वा साधयितव्यं यथा नास्ति खरविषाणमिति ; यदुक्तं—" विकल्पसिद्धे तस्मिन्सत्तेतरे साध्ये" इति । यत्तु सर्वज्ञसत्तायां साधनीयायां त्रयीं दोषजातिमसिद्ध-विरुद्धाऽनैकान्तिकलक्षणां हेतुर्नातिवर्त्तते तथाहि—सकलज्ञसत्त्वे साध्ये किं भावधर्मो हेतुः, उताऽभावधर्मः, अथोभयधर्मः ?। आद्येऽसिद्धिः, असिद्धसत्ताके भावधर्माऽसिद्धेः ; द्वितीये विरोधः, भावे साध्येऽभावधर्मस्याऽभावाव्यभिचारित्वेन विरुद्धत्वात् ; तृतीये व्यभिचारः, अस्तित्वशून्येऽपि वृत्तेः ।

तदुक्तम्—

"नासिद्धे भावधर्मोऽस्ति व्यभिचार्य्युभयाश्रयः ।

विरुद्धो धर्मो भावस्य सा सत्ता साध्यते कथम् ?" ॥ १ ॥ इति ॥

तदेतदसङ्गतम् । शक्यं हि वदितुं धूमवत्त्वादिर्यद्यग्निमत्पर्वतधर्मस्तदाऽसिद्धः को हि नामाग्निमत्पर्वतधर्मं हेतुमिच्छन्नग्निमत्त्वमेव नेच्छेत् ?, तद्विपरीतधर्मश्चेत् तदा विरुद्धः साध्याविरुद्धसाधनात् ; उभयधर्मश्चेद् व्यभिचारी सपक्षेतरयोर्वर्तनात् ; एवं च सर्वानुमानोच्छेदप्रसङ्गः । विमत्यधिकरणभावापन्नधर्मिधर्मत्वे धूमवत्त्वादेः सर्वं सुस्थम् । यथा च पर्वतस्य पर्वतत्वादिना प्रसिद्धसत्ताकस्य सन्दिग्धाग्निमत्त्वादिसाध्यधर्मस्य धर्मो हेतुर्न विरुध्यते तथैव प्रसिद्धात्मत्वादिविशेषणसत्ताकस्य अप्रसिद्धसर्वज्ञत्वोपाधिसत्ताकस्य च धर्मिणो धर्मः प्रकृतो हेतुः कथं विरुध्येत ?। विकल्पसिद्धो धर्मी नास्त्येव विकल्पस्याऽप्रमाणत्वादित्यूचानो नैयायिकोऽनात्मज्ञशेखरः, विकल्पसिद्धधर्मिणोऽनङ्गीकारे तस्यैवंविधवचनस्यैवानुपपत्तेः; विकल्पसिद्धधर्मिणोऽप्रसिद्धौ तत्प्रतिषेधासम्भवादिति तुष्णीम्भाव एव तस्याऽऽपन्नत् । नातो विकल्पादन्यतः सर्वज्ञखरविषाणयोः सदसत्तायां साध्यायां समस्ति सिद्धिस्तत्रेन्द्रियव्यापाराभावात् । न चेन्द्रियप्रतिपन्न एवार्थे मनोविकल्प-

स्यापि प्रवृत्तिप्रतीतेः कथं तत्राऽसतीन्द्रियव्यापारे विकल्पस्यापि प्रवृत्तिरित्यभिधानं रमणीयम्?, धर्माऽधर्मादौ तत्प्रवृत्त्यभावानुषङ्गात्। आगमसामर्थ्यप्रभवत्वेनाऽस्याऽत्र प्रवृत्तौ प्रकृतेप्यतस्तत्प्रवृत्तिर्भवतु विशेषाभावात्। ननु परिणामित्वे साध्ये शब्दधर्मिण इव कृशानुमत्त्वे साध्ये धरित्रीधरस्यापि प्रमाणविकल्पप्रसिद्धत्वं प्राप्नोति धरित्रीधरेऽपि दृश्यमानभागस्याऽग्निमत्त्वसाधने प्रत्यक्षबाधात् साधनानर्थक्यप्रसङ्गाद्वा तत्र साध्यसमुपलम्भात्, अदृश्यमानभागस्य च तत्साधने तस्य प्रत्यक्षाभावात्; नैवं अवयविद्रव्यापेक्षया पर्वतादेः सांव्यवहारिकप्रत्यक्षप्रसिद्धत्वाभिधानात्, अतिसूक्ष्मेक्षिकापर्यालोचने तु न किञ्चित् प्रत्यक्षं स्याद् बहिरन्तर्वाऽस्मदादिप्रत्यक्षस्याऽशेषविशेषतोऽर्थसाक्षात्कारेऽसामर्थ्याद्, योगिप्रत्यक्षमेव किल तत्रालमिति। विकल्पप्रसिद्धस्य सत्त्वेतरसाध्यकत्वोपदर्शनेन प्रमाणोभयप्रसिद्धधर्मिणोः कामचार एव द्रष्टव्यः साध्यविशेषानुपदर्शनात्, सत्त्वेतरसाध्यकत्वं तु तत्र न सम्भविष्णिवति तु सुज्ञानमेव।

अवसितं स्वार्थानुमानम्, तस्य च त्रीण्यङ्गानि धर्मी साध्यं साधनं च, तत्र साधनं गमकत्वेनाऽङ्गम्, साध्यं च गम्यत्वेन, धर्मी पुनः साध्यधर्माधारत्वेन, आधारविशेषनिष्ठतया साध्यसिद्धेरनुमानप्रयोजनत्वात्, धर्ममात्रस्य तु व्याप्तिनिश्चयकाल एव सिद्धत्वात् "यत्र यत्र धूमवत्त्वं तत्र तत्र वह्निमत्त्वम्" इति। अथवा पक्षो हेतुरित्यङ्गद्वयं तत्र, साध्यधर्मविशिष्टस्य धर्मिणः पक्षत्वात्, इति धर्मधर्मिभेदाभेदविवक्षया पक्षद्वयं द्रष्टव्यमिति ॥ २२ ॥

अथ परार्थानुमानं व्याचष्टे—

## हेतोः परार्थम् ॥ २३ ॥

हेतुर्निश्चिताविनाभावैकलक्षणस्य साधनस्य साधनत्वा-

भिव्यञ्जकः शब्दप्रयोगो वक्ष्यते, तस्मात् तद्द्वारेण सामान्यलक्षणानुवादेन विशेषलक्षणविधानात् साधनात् साध्यज्ञानमविनाभावरूपेण साधनं समवधार्य साध्यस्योक्तलक्षणस्य परोक्षार्थस्य ज्ञानं सम्यग् निर्णय इत्यर्थः । तच्च परोपदेशापेक्षत्वात् परार्थमनुमानमुच्यते । परार्थानुमानवत्परार्थप्रत्यक्षमपि "पश्य पुर इदं कलधौतशकलम्" इत्युपदेशप्रभवं तद्विषयं निभालनीयम् ॥ २३ ॥

इदानीं हेतोर्वचनात्मकस्याऽपि प्राचीनरूढ्यनुरोधेन परार्थानुमानत्वमावेदयति—

## हेतुरुपचारात् ॥ २४ ॥

अचेतनं हि वचनं न साक्षात् प्रमितिफलसाधनमिति नास्कन्दत्यनुपचरितप्रमाणभावम्, मुख्यानुमानानुकूलतया तूपचरितानुमानाभिधानाभिधेयतामायाति, उपचारः पुनरत्र कार्ये कारणस्य, यत्प्रतिपादकगतं ह्यनुमानं तस्य कार्यं तद्वचनम् । कारणे वा कार्योपचारः, प्रतिपाद्यगतं हि यज्ज्ञानं तस्य कारणं साधनवचनमित्यौपचारिकमनुमानं हेतुः । इह च मुख्यार्थबाधे प्रयोजने निमित्ते चोपचारः प्रवर्तते इत्यनुभवो विदुषाम् । तत्र साधनप्रयोगस्याऽचेतनत्वेन यथार्थज्ञानात्मकप्रमाणत्वस्य तत्र व्यक्तो बाधः, प्रयोजनं चानुमानावयवाः प्रतिज्ञादय इति शास्त्रे व्यवहार एव ज्ञानात्मन्यनंशे तद्व्यवहाराऽयोगात्; निमित्तं तु ज्ञानात्मकानुमानहेतुत्वं तस्य । एवं च यथाऽनुमानप्रतीतोऽर्थः परस्मै प्रतिपाद्यमानो वचनरूपापन्नः परार्थमनुमानमुच्यते तथैव प्रत्यक्षप्रतीतोऽपि परस्मै प्रतिपाद्यमानो वचनरूपापन्नः परार्थं प्रत्यक्षं वेदितव्यः परप्रत्यायनस्योभयत्राप्यविशेषात्, तथाच सूत्रे— "प्रत्यक्षपरिच्छिन्नार्थाभिधायि वचनं परार्थं प्रत्यक्षम्" "यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिन-

पतिप्रतिमाम् " इति । एवं स्मरणादेरपि यथासम्भवं पारार्थ्यं प्रतिपत्तव्यम्। यदाहुः—

"स्मरत्यदो दाशरथिर्भवन् भवा-
नमुं वनान्ताद् वनितापहारिणम् ।
पयोधिमाबद्धचलज्जलाविलं
विलङ्घ्य लङ्कां निकषा हनिष्यति ?" ॥१॥ इत्यादि ।

आहुश्चात्र महावादिश्रीसिद्धसेनदिवाकरपादाः—

"स्वनिश्चयवदन्येषां निश्चयोत्पादनं बुधैः ।
परार्थं मानमाख्यातं वाक्यं तदुपचारतः ॥ १ ॥
प्रत्यक्षेणानुमानेन प्रसिद्धार्थप्रकाशनात् ।
परस्य तदुपायत्वात् परार्थत्वं द्वयोरपि ॥ २ ॥
प्रत्यक्षप्रतिपन्नार्थप्रतिपादि च यद् वचः ।
प्रत्यक्षं प्रतिभासस्य निमित्तत्वात्तदुच्यते ॥ ३ ॥
साध्याविनाभुवो हेतोर्वचो यत्प्रतिपादकम् ।
परार्थमनुमानं तत् पक्षादिवचनात्मकम्" ॥४॥ इति ॥२४॥

अथ प्रतिज्ञाया अपि परार्थानुमाने उपयोगित्वमुपदर्शयति—

## साध्यधर्मस्याऽऽधारविशेषप्रज्ञापनं प्रतिज्ञार्थः ॥ २५ ॥

यथा यत्र यत्र धूमस्तत्र तत्राऽनल इति हेतोः सामान्येनाधारप्रतिपत्तावपि पर्वतादिविशिष्टधर्मिधर्मताप्रतिपत्त्यै धूमश्चात्रेत्येवंरूपमुपसंहारवचनमवश्यमाश्रीयते शाक्यैस्तथा साध्यधर्मस्याऽऽधारविशेषप्रज्ञापनाय प्रतिनियतधर्मिधर्मताप्रसिद्ध्यर्थं प्रतिज्ञाऽपि पक्षप्रयोगरूपाऽवश्यमेषितव्या ।

अपि च पक्षप्रयोगः साध्यसिद्धिप्रतिबन्धित्वात् परेषां नाभिमतः, आहोस्वित् प्रयोजनाभावात् ? । तत्र प्रथमः पक्षोऽयुक्तः,

वादिना साध्याविनाभावैकलक्षणहेतुना प्रस्तुतायां स्वपक्षसिद्धौ प्रतिज्ञाप्रयोगस्य तत्प्रतिबन्धकत्वाभावात् ततः प्रतिपक्षासिद्धेः । द्वितीयोऽप्यसन्, तत्प्रयोगे प्रतिपाद्यप्रतिपत्तिविशेषस्य प्रयोजनस्य सद्भावात्; पक्षाप्रयोगे तु केषाञ्चिद् मन्दधियां प्रकृतार्थप्रतिपत्त्यभावात् । ये तु तत्प्रयोगमन्तरेणापि प्रकृतार्थं प्रतिपद्यन्ते तान् प्रत्यनुमन्महे तदप्रयोगम् । यदाह– "प्रयोगपरिपाटी तु प्रतिपाद्यानुरोधतः" इति, ततो युज्यत एव गम्यमानस्यापि तस्य प्रयोगः, कथमन्यथा शास्त्रादावपि प्रतिज्ञाप्रयोगः स्यात्? । न हि शास्त्रे नियतकथायां प्रतिज्ञा नाभिधीयते अग्निरत्र धूमात्, वृक्षोऽयं शिंशपात्वात्, इत्याद्यभिधानानां तत्र तत्रोपलम्भात्, परानुग्रहप्रवृत्तानां शास्त्रकृतां प्रतिपाद्यावबोधनाधीनधियां शास्त्रादौ प्रतिज्ञाप्रयोगो युक्त एवोपयोगित्वादित्यभिधाने वादेऽप्यसावस्तु तत्रापि तेषां तादृशत्वात् ।

किञ्च कार्य-स्वभावा-ऽनुपलम्भभेदेन पक्षधर्मत्वादिरूपत्रयभेदेन वा त्रिविधं साधनमुक्त्वाऽसिद्धत्वादिदोषपरिहारेण समर्थयमानः कः खलु प्रामाणिकः पुमान् पक्षप्रयोगं नाङ्गीकुरुते? । न चाऽसमर्थितो हेतुः साध्यसिद्ध्यङ्गमतिप्रसक्तेः, ततः पक्षप्रयोगमनभिलाषुकेण हेतुमनभिधायैव तत्समर्थनं विधानीयम्; हेतोरनभिधाने कस्य समर्थनमिति चेद् पक्षस्याप्यनभिधाने क हेत्वादि प्रवर्त्तताम्?; गम्यमाने प्रतिज्ञाविषय एवेति चेद् गम्यमानस्याऽपि हेत्वादेर्भवतु समर्थनम् । गम्यमानस्याऽपि हेत्वादेर्मन्दमतिप्रतिपत्त्यर्थं वचने तदर्थमेव पक्षप्रयोगाऽऽदरे कः कुक्षिव्यथोदयः? । ततः साध्यप्रतिपत्तिमभिवाञ्छता हेतुप्रयोगवत्पक्षप्रयोगोऽप्यभ्युपगमनीयः; इति ॥ २५ ॥

अथ प्रतिज्ञां विभाषते–

## पक्षस्य प्रयोगः प्रतिज्ञा ॥ २६ ॥

अनुमेयधर्मविशिष्टो धर्मी पक्ष उक्तस्तस्य प्रयोगस्तेनैव रूपेण बोधकं वाक्यं प्रतिज्ञायतेऽनयेति प्रतिज्ञा। यथा कृशानुमानयं भूधर इति ॥ २६ ॥

अथ हेतुस्वरूपं प्रदर्शयति—

## साधनस्य हेतुः ॥ २७ ॥

प्रयोग इति वर्तते साधनस्य निर्णीतसाध्याऽन्यथानुपपत्तिकस्य प्रयोगस्तेनैव रूपेण बोधकशब्दो हिनोति प्रतिपद्यते परोक्षार्थमनेनेति हेतुः। न च धूम इत्यादेरपि हेतुत्वप्रसङ्गः, धूम इति पदस्य साधनप्रयोगत्वाभावात् साधनभावेन साधनबोधकपदस्य साधनप्रयोगत्वात्। न च धूम इति पदं साधनत्वाऽभिव्यञ्जकं पञ्चम्यन्तस्य तृतीयान्तस्यैव वा धूमपदस्य साधनत्वबोधनसामर्थ्यात्, इति तथाभूतस्यैव धूमपदस्य साधनत्वावबोधननिपुणिममाहिम्ना साधनप्रयोगत्वेन हेतुत्वमिति न कश्चिद् दोषः ॥ २७ ॥

अथ भेदद्वयेनाऽमुमाचष्टे—

## तथोपपत्त्यन्यथाऽनुपपत्तिभ्यां द्वेधा ॥२८॥

हेतुरिति वर्त्तते स च द्वेधा द्विविधः, तथैव साध्यसद्भावप्रकारेणैवोपपत्तिस्तथोपपत्तिः, अन्यथा साध्याभावप्रकारेणाऽनुपपत्तिरेवान्यथानुपपत्तिश्च। यथा धूमध्वजधारीयं धराधरकन्धरा तद्भाव एव तत्र धूमवत्त्वस्योपपत्तेरसत्यनुपपत्तेर्वा ॥२८॥

तत्किमुभयविधोपि साधनप्रयोगः प्रयोक्तव्यः ?; अत्राह—

## अनयोस्तात्पर्यसाम्यादेकतरः प्रयोज्यः ॥ २९ ॥

अनयोस्तथोपपत्त्यन्यथानुपपत्तिरूपयोः साधनप्रयोगयो-

मध्ये एकतरः प्रयोक्तव्य एकेनैव साध्यप्रतिपत्तिसिद्धेरन्यस्य वैयर्थ्याद् द्वयोस्तात्पर्यसाम्यात् । एतदुक्तं भवति शब्दानामभिधेयमन्यत्, प्रकाश्यं प्रयोजनमन्यत्, तत्राभिधेयापेक्षया वाचकत्वं भिद्यते प्रकाश्यं त्वभिन्नमन्वये कथिते व्यतिरेकगतिर्व्यतिरेके चान्वयगतिरित्युभयत्रापि साधनस्य साध्याविनाभावः प्रकाश्यते । न च यत्राभिधेयभेदस्तत्र तात्पर्येणापि भेत्तव्यमित्यास्ति नियमः पीनो देवदत्तो दिवा न भुङ्क्ते पीनो देवदत्तो निशि भुङ्क्ते इत्यनयोर्वाक्ययोरभिधेयभेदेऽपि तात्पर्यभेदाभावादिति तात्पर्यैक्ये एकतर एव साधनप्रयोगः कामचारेण प्रयोक्तव्य उभयस्य नैरर्थक्यात्, प्रयोगयुग्मेऽपि हि वाक्यविन्यास एव विशिष्यते न प्रकाशनीयोऽर्थः, स चान्यतरेणैव प्रयोगेण प्रकटीस्यादिति कृतमपरप्रयोगेण ।

आह च भगवान् श्रीसिद्धसेनदिवाकरः—

"हेतोस्तथोपपत्त्या वा स्यात्प्रयोगोऽन्यथाऽपि वा ।
द्विविधोऽन्यतरेणाऽपि साध्यसिद्धिर्भवेदिति"॥१॥ इति ॥२९॥

एवं च पक्षसाधनप्रयोगलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गमित्युक्तं भवति न दृष्टान्तादिवचनं व्युत्पन्नमतीन् प्रति ताभ्यामेव सिद्धेः, तथाहि " प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इत्याह मुनिरक्षपादः । तत्र प्रतिज्ञाऽऽगमः, हेतुरनुमानं प्रतिज्ञातार्थस्य तेनानुमीयमानत्वात्, उदाहरणं प्रत्यक्षं वादिप्रतिवादिनोर्यत्र बुद्धिसाम्यं तदुदाहरणमित्युक्तेः, उपनय उपमानं दृष्टान्तधर्मिसाध्यधर्मिणोः सादृश्यात् प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमित्यभिधानात्, सर्वेषामेकविषयत्वप्रदर्शनफलं निगमनमिति । तत्र नोदाहरणमनुमानाङ्गं तद्धि किं साक्षात्साध्यप्रतिपत्त्यर्थमुपादीयते साध्याविनाभावनिर्णयार्थं वा व्याप्तिप्रतिसन्धानार्थं वा ?। प्रकारान्तरासम्भवाद् । न तावदाद्यो विकल्पः क्षेमकारः, न हि तत् साध्यप्रतिपत्त्यङ्गं तत्र पक्षहेतुवचनयोरेव

व्यापारोपलब्धेः । नापि द्वितीयः, विपक्षे बाधकादेव तत्सिद्धेः, न हि सपक्षे सत्त्वमात्राद्धेतोर्व्याप्तिः सिद्धिसौधमध्यास्ते, स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यत्र तदाभासेऽपि तत्सम्भवात् । ननु साकल्येन साध्यनिवृत्तौ साधननिवृत्तेरत्रासम्भवात् परत्र गौरेऽपि तत्पुत्रे तत्पुत्रताया भावान्न व्याप्तिस्तर्हि साकल्येन साध्यनिवृत्तौ साधननिवृत्तिनिश्चयरूपाद् बाधकादेव व्याप्तिप्रसिद्धेरलं दृष्टान्तकल्पनया । अपि च दृष्टान्तो व्यक्तिरूपो भवति यथाऽग्नौ साध्ये महानसादिः, व्यक्तिरूपं च निदर्शनं कथं तदविनाभावनिश्चयार्थं स्यात् ?; प्रतिनियतव्यक्तौ तन्निश्चयस्य कर्तुमशक्तेः, अनियतदेशकालाकाराधारतया सामान्येन तु व्याप्तिः, कथमन्यथाऽन्यत्र साधनं साध्यं गमयेत् ? । तत्रापि दृष्टान्तेऽमुष्यां व्याप्तौ विप्रतिपत्तौ सत्यां दृष्टान्तान्तराऽन्वेषणे दुर्वारोऽनवस्थानदूषणावतारः । नापि तृतीयः । प्रतिपन्नाऽविनाभावस्य व्युत्पन्नधियः पक्षसाधनप्रयोगादेव तत्सिद्धेः । व्यर्थं चान्तर्व्याप्त्या हेतोः साध्यप्रत्यायने शक्तावशक्तौ च बहिर्व्याप्तेरुद्भावनम्, "मत्पुत्रोऽयं बहिर्वक्ति एवंरूपस्वराऽन्यथाऽनुपपत्तेः" इत्यत्र बहिर्व्याप्त्यभावेपि गमकत्वस्य "स श्यामः तत्पुत्रत्वात् इतरतत्पुत्रवत्" इत्यत्र पुनस्तद्भावेप्यगमकत्वस्योपलब्धेः । अन्तर्व्याप्तिबहिर्व्याप्तिस्वरूपपरिचयार्थं तु "पक्षीकृत एव विषये साधनस्य साध्येन व्याप्तिरन्तर्व्याप्तिरन्यत्र तु बहिर्व्याप्तिः" । "यथाऽनेकान्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेरिति, अग्निमानयं देशो धूमवत्त्वाद् य एवं स एवं यथा पाकस्थानमिति च" इति द्विसूत्री स्मरणीया । एवमुपमाननिगमनयोरपि नास्ति परप्रतिपत्तौ सामर्थ्यं पक्षसाधनप्रयोगादेव तस्याः सिद्धेः । अन्यच्च प्रयुज्याऽपि दृष्टान्तादि समर्थनमवश्यं हेतोरभिधानीयमितरथा साध्यसिद्ध्यसम्भवात् तस्मात्तदेव समुचिताभिधानं पर्याप्तं दृष्टान्तादिवचनेन; नन्वेवं तर्हि दृष्टान्तादिः सर्वथा निरु-

पयोग एवेति भावत्कोऽभिसन्धिः ? । अत्राह—

## बालबोधायोदाहरणोपनयनिगमनान्यपि॥३०॥

प्रयोज्यपदं वर्त्तते। अर्थवशाद् वचनलिङ्गविपरिणामात् प्रयोज्यानीतीहानुसन्धेयम् । बालोऽव्युत्पन्नमतिस्तस्य बोधो व्युत्पत्तिप्रतिपत्तिस्तदर्थमुदाहरणादित्रिकम्, अपिशब्दात् प्रतिज्ञाहेतुपरिग्रहः, इति पञ्चैते यथायोगं प्रयुज्येरन्निति भावः । नातस्तद्व्युत्पत्तिसाधकत्वेनोपयोगित्वाद् दृष्टान्तादि नार्थवत्, एतानि च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्च अवयवसंज्ञयोच्यन्ते, एतच्चोपलक्षणम्, तेन प्रतिज्ञादीनां पञ्च शुद्धयोऽपि प्रयोक्तव्या बालानुरोधात्, अपिशब्दाद्वा प्रतिज्ञाहेतुभ्यां सममभूषां परिग्रहः ।

यदाहुः— श्रीमद्भद्रबाहुस्वामिपूज्यपादाः—

"कत्थइ पञ्चावयवं दसहा वा सव्वहाण पडिकुट्ठंति" इति। न हि शङ्कितसमारोपितदोषाः पञ्चाप्यवयवाः स्वां स्वामनादीनवामर्थविषयां धियमलमाधातुमिति प्रतिज्ञादीनां तं तं दोषमाशङ्क्य तत्तत्परिहाररूपाः पञ्चैव शुद्धयः प्रयोक्तव्या इति बालानुरोधाद् दशावयवमिदमनुमानवाक्यं प्रयोज्यमिति । एतच्च दशावयवमुत्कृष्टं परार्थानुमानमवसेयम्, मध्यमं तु नवावयवादारभ्य यावद् त्र्यवयवम् । जघन्यं पुनः साधनमात्रप्रयोगस्वरूपम्, प्रतिपाद्यानां मन्दव्युत्पन्नातिव्युत्पन्नत्वादिति ॥ ३० ॥

अथोदाहरणमावेदयति—

## दृष्टान्तनिर्देश उदाहरणम् ॥ ३१ ॥

वक्ष्यमाणलक्षणस्य दृष्टान्तस्य निर्देशः स्वेन रूपेण बोधकवचनमुदाहरणम् । तच्च द्विविधं दृष्टान्तभेदाद्, दृष्टान्तो हि साधर्म्यवैधर्म्याभ्यामनुपदमेव द्विधा वक्ष्यते । तत्र साधर्म्य-

दृष्टान्तवचनं साधर्म्योदाहरणम्; वैधर्म्यदृष्टान्तवचनं वैधर्म्योदाहरणम्; यथा यो यो धूमवान् स स वन्हिमान् यथा महानसः, योऽग्निमान् नास्ति नासौ धूमवान् यथा जलाशय इति क्रमेणोदाहरणद्वयोदाहरणम् ॥ ३१ ॥

दृष्टान्तनिर्देश इत्यत्र दृष्टान्तजिज्ञासामुपशमयति-

## व्याप्तिप्रतिपत्तिप्रदेशो दृष्टान्तः ॥३२॥

व्याप्तिः साध्यसाधनयोरविनाभावलक्षणा । तस्याः प्रतिपत्तिः प्रतिसन्धिः । सा यत्र प्रादुःष्यादसौ तत्प्रदेशो दृष्टौ अन्तौ साध्यसाधनरूपौ धर्मौ यत्रेति दृष्टान्तः ॥ ३२ ॥

प्रकारतोऽमुं प्रकटयति-

## साधर्म्यवैधर्म्याभ्यां द्विप्रकारः ॥३३॥

दृष्टान्त इत्यनुवर्त्तते समानो धर्मो यस्यासौ सधर्मा विसदृशो धर्मो यस्यासौ विधर्मा तयोर्भावः साधर्म्यं वैधर्म्यं च ॥ ३३ ॥

तत्र साधर्म्यदृष्टान्तं दर्शयति-

## साधनसत्त्वे नियमेन साध्यवान् साधर्म्यदृष्टान्तः ॥ ३४ ॥

यथा यत्र यत्र धूमस्तत्र तत्रानलः, यथा पाकप्रदेशः ॥३४॥

वैधर्म्यदृष्टान्तमाचष्टे-

## साध्याभावे साधनाभाववान् वैधर्म्यदृष्टान्तः ॥ ३५ ॥

नियमेनेति वर्त्तते । असति साध्ये नियमेन साधनाभाववानित्यर्थः, यथाऽसति कृशानौ न भवत्येव धूमः, यथा जलाशयः ॥ ३५ ॥

अथोपनयं ब्रवीति—

## साधनस्य धर्मिण्युपसंहार उपनयः ॥३६॥

उपसंह्रियतेऽनेनेत्युपसंहारः, उपनीयतेऽनेनेत्युपनयो वचनात्मकः, यथा धूमवांश्चायमिति ॥ ३६ ॥

निगमनं गमयति—

## साध्यस्य निगमनम् ॥ ३७ ॥

धर्मिण्युपसंहारः साध्यधर्मस्य, प्रतिज्ञाहेतूदाहरणोपनयाः साध्यलक्षणैकार्थतया निगम्यन्ते सम्बन्ध्यन्तेऽनेनेति निगमनम् । यथा तस्मादग्निमानयमिति ॥ ३७ ॥

उक्तमनुमानम् । अथानुमानाभासं प्रदर्शयामः—

पक्षाभासादिसमुद्भवं ज्ञानमनुमानाभासम् । एतच्च यदा स्वप्रतिपत्त्यर्थं तदा स्वार्थानुमानाभासं यदा तु परप्रतिपत्त्यर्थं तदा परार्थानुमानाभासम् । तत्र बाधितसाध्यधर्मविशेषणः, अनभिमतसाध्यधर्मविशेषणः, अधिगतसाध्यधर्मविशेषणश्चेति त्रयः पक्षाभासाः । अबाधिताभिमतानधिगतसाध्यधर्मविशिष्टधर्मिणां सम्यक्पक्षत्वेन प्रागुपवर्णितत्वादेतेषां च तद्विपरीतत्वात् । बाधितसाध्यधर्मविशेषणः प्रत्यक्षानुमानागमलोकस्ववचनादिभिः साध्यधर्मस्य बाधनाद्बहुविधः, तत्र प्रत्यक्षबाधितसाध्यधर्मविशेषणो यथा— अनुष्णोऽनलः, न मधु मधुरम्, न सुगन्धं विदलन्मालतीमुकुलम्, अचाक्षुषः कलशः, अश्रावणः शब्दः, नास्ति बहिरर्थ इत्यादि । अनुमानबाधितसाध्यधर्मविशेषणो यथा—अपरिणामी शब्द इति । एषा हि प्रतिज्ञा परिणामी शब्दः कृतकत्वस्य तथैवोपपत्तेरित्यनुमानेन बाध्यते, आगमबाधितसाध्यधर्मविशेषणो यथा— प्रेत्याऽसुखप्रदो धर्म इति परलोके धर्मस्य सुखप्रदत्वं सर्वागमसिद्धम्; एवं जैनेन रजनीभोजनं भजनीयम्, जैनेन परकीयकलत्रमभिलषणीयमित्यादि । लोक-

बाधितसाध्यधर्मविशेषणो यथा- शुचि नरशिरःकपालमिति लोके हि नरशिरःकपालादीनामशुचित्वं प्रसिद्धम्। स्ववचनबाधितसाध्यधर्मविशेषणो यथा- माता मे वन्ध्येति यदि च माता कथं तत्र वन्ध्यत्वं यदि वा वन्ध्या कथं तत्र मातृत्वम्?, इति स्ववचनव्याघातः। एवं निरन्तरमहं मौनीत्याद्यपि। यद्यपि स्ववचनस्य शब्दरूपत्वात् तद्बाधितसाध्यधर्मविशेषणः पक्षाभासः प्रागभिहितागमबाधितसाध्यधर्मविशेषण एव पक्षाभासेऽन्तर्गच्छति तथापि शिष्यमनीषाविकाशार्थं पार्थक्येनाभिधानमस्य- न दोषमावक्ष्यति। एवमेव लोकबाधितसाध्यधर्मविशेषणः पक्षाभासोऽपि द्रष्टव्यः, लोकप्रतीतिर्हि प्रत्यक्षाद्यन्यतरप्रमाणरूपेति तद्बाधितसाध्यधर्मविशेषणः पक्षाभासः प्रत्यक्षबाधितसाध्यधर्मविशेषणादिपक्षाभासेष्वन्तर्भवत्येव शिष्यशेमुषीसमुल्लासार्थं तु नायुक्तमिदमीयं पृथगभिधानम्। प्रतीतिबाधितसाध्यधर्मविशेषणं पक्षाभासमप्याहुः- अचन्द्रः शशीति शशिनश्चन्द्रशब्दवाच्यत्वं प्रतीतिसिद्धम्। एवं स्मरणबाधितसाध्यधर्मविशेषणः पक्षाभासो यथा- स रसालपादपः फलशून्य इति अयं पक्षः कस्यचिद् रसालतरुं फलभरभ्राजिष्णुं सम्यक्स्मर्तुः स्मरणेन बाध्यते। प्रत्यभिज्ञानबाधितसाध्यधर्मविशेषणो यथा- सदृशेऽपि क्वचन वस्तुनि कश्चन कञ्चन पुमांसमधिकृत्य पक्षीकुरुते- तदेवेदमिति, तस्याऽयं पक्षः तेन सदृशमिदमिति प्रत्यभिज्ञानेन बाध्यते। तर्कबाधितसाध्यधर्मविशेषणो यथा- यो यस्तत्तनयः स श्यामः, इति व्याप्तिः साध्वीति अस्यायं पक्षो यो जनन्युपभुक्तशाकाद्याहारपरिणामपूर्वकस्तत्तनयः स श्याम इति व्याप्तिग्रहणेन सम्यक्तर्केण बाध्यते इति।

अनभिमतसाध्यधर्मविशेषणो यथा- स्याद्वादिनः शाश्वतिक एव कलशादिरशाश्वतिक एव वेति वदतः; एवं नित्यः शब्द इति वदतस्ताथागतस्य प्रकृतः पक्षाभासः।

तत्राधिगतसाध्यधर्मविशेषणो यथा– जैनान् प्रत्यवधारणवर्जं परेण प्रयुज्यमानः समस्ति जीव इत्यादिः, अवधारणं हि वर्जयित्वापरोपन्यस्तः सर्वोऽपि प्रयोग आर्हतानां प्रतीतमेवार्थं प्रकाशयति, ते हि जीवादिसर्ववस्त्वनेकान्तात्मकं प्रत्यपत्सत ततस्तेषामवधारणरहितं प्रमाणवाक्यं सुनयवाक्यं वा प्रयुज्यमानं प्रसिद्धमेवार्थमुद्भावयतीति व्यर्थस्तत्प्रयोगः। सिद्धसाधनः, प्रसिद्धसम्बन्ध इति द्वयं नामान्तरमेवाऽस्य।

इत्युक्तः पक्षाभासः। अथ हेत्वाभासावसरस्तत्र हेतुलक्षणशून्या हेतुवदाभासमाना हेत्वाभासा ज्ञेयाः, अविनाभावाभाव एव हेत्वाभासत्वबीजमित्यर्थः, तान् विभागतो विशेषलक्षणतश्चाऽसुज्ञानतया प्राचीनपद्धतिमनुव्रजन् भगवान् सूत्रकारः स्वयं सूत्रतः प्राह—

**असिद्ध-विरुद्धा-ऽनैकान्तिका हेत्वाभासाः॥३८॥**

यद्यप्येते साधनदोषा एव दुष्टे साधने तद्भावात् तथापि साधनाभिधायके हेतावुपचारात् प्राचीनसूरिमिश्रैः प्रोचानत्वेन तत्प्रसिद्धिबाधामनाश्रयद्भिस्तत्रभवद्भिरपि हेतुदोषत्वेनैव बभाषाणाः। साधनं हेतुरित्यनर्थान्तरत्वाभिसन्धिरेव वा समाधिः। त्रय एवैते हेत्वाभासा इति तु स्वयं दर्शयिष्यतेऽनुपदं भगवदाचार्येणेति तत्रैवोन्मीलितः परीक्षालेश इत्यास्तां तावत् ॥३८॥

तत्रासिद्धस्य लक्षणमाचष्टे—

**अप्रतीतोऽसिद्धः ॥ ३९ ॥**

अप्रतीतिश्च स्वरूपाभावनिश्चयात् स्वरूपे सन्देहाद्वा। स्वरूपाभावनिश्चये स्वरूपासिद्धो हेतुः, स्वरूपसन्देहे पुनः सन्दिग्धासिद्धः। तत्राद्यो यथा– शब्दः परिणामी चाक्षुषत्वादित्यत्र चाक्षुषत्वम्, शब्दस्य हि श्रावणत्वेन चाक्षुषत्वाभावो निश्चित इति चाक्षुषत्वं स्वरूपासिद्धो हेतुः। द्वितीयो यथा धूमवाष्पा-

दिविवेकविकलः कश्चिदाह–अग्निमानेष देशो धूमात्, अत्र धूमो हेतुः सन्दिग्धासिद्धः तत्स्वरूपसन्देहात् ॥ ३९ ॥

असिद्धप्रभेदान् प्राह–

## उभयाऽन्यतरासिद्धाभ्यां द्विधा ॥ ४० ॥

उभयासिद्धोऽन्यतरासिद्धश्चेति द्वौ भेदौ। तत्रोभयपदं वादिप्रतिवाद्युभयार्थकम्, अन्यतरपदं तदन्यतरग्राहकम्। तत्राद्यो यथा–परिणामी शब्दश्चाक्षुषत्वात्; द्वितीयो यथा–अचेतनास्तरवो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वात्, एतच्च प्रतिवाद्यसिद्ध्यपेक्षया द्रष्टव्यम्। ताथागता हि तरूणामचैतन्यं प्रसाधयांबभूवांसो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणराहित्यं हेतूचक्रुः स चासिद्ध आर्हतानाम्, तैस्तत्र चैतन्याद्यभ्युपगमात्।

वाद्यसिद्ध्यपेक्षया तु परिणामी शब्द उत्पत्तिमत्त्वादित्यत्रोत्पत्तिमत्त्वात्, अत्र हि वादिनः कापिलस्यासिद्धमुत्पत्तिमत्त्वं तेनाऽविर्भावमात्रस्य सर्वत्रोरीकारात् ॥ ४० ॥

नन्वन्येपि परैरसिद्धप्रकारा जगदिरे, तथाहि—

विशेष्यासिद्धस्तावत् शब्दोऽनित्यः सामान्यवत्त्वे सति चाक्षुषत्वात्, इति अत्र चाक्षुषत्वं विशेष्यमसिद्धम्, शब्दस्य श्रावणत्वात्। १। विशेषणासिद्धो यथा–शब्दः परिणामी चाक्षुषत्वे सति सामान्यवत्त्वात्, अत्र चाक्षुषत्वं विशेषणमसिद्धम्, ।२। आश्रयासिद्धो यथा–अस्ति प्रधानं विश्वस्य परिणामिकारणत्वात्। ३। आश्रयैकदेशासिद्धो यथा–नित्याः प्रधानपुरुषेश्वरा अकृतकत्वात्। ४। सन्दिग्धाश्रयासिद्धो यथा–गोत्वेन सन्दिह्यमाने गवये आरण्यकोऽयं गौर्जनदर्शनोत्पन्नत्रासत्वात्। ५। सन्दिग्धाश्रयैकदेशासिद्धो यथा–गोत्वेन सन्दिह्यमाने गवये गवि च आरण्यकाविमौ गावौ जनदर्शनोत्पन्नत्रासत्वात्। ६। आश्रयासन्दिग्धवृत्त्यसिद्धो यथा–मयूरवानेष प्रदेशः केकायितो-

पेतत्वात् । ७ । आश्रयैकदेशसन्दिग्धवृत्त्यसिद्धो यथा— मयूरवन्तावेतौ सहकार-कर्णिकारौ केकायितोपेतत्वात् । ८ । व्यर्थविशेष्यासिद्धो यथा—शब्दोऽनित्यः कृतकत्वे सति सामान्यवत्त्वात् । ९ । व्यर्थविशेषणासिद्धो यथा—शब्दोऽनित्यः सामान्यवत्त्वे सति कृतकत्वात् ।१०। सन्दिग्धविशेष्यासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः पुरुषत्वे सति अद्याप्यनुत्पन्नतत्त्वज्ञानत्वात् । ११ । सन्दिग्धविशेषणासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः सर्वदातत्त्वज्ञानराहित्ये सति पुरुषत्वात् । १२ । एकदेशासिद्धो यथा प्रागभावो वस्तु उत्पादविनाशधर्मकत्वात् । १३ । विशेषणैकदेशासिद्धो यथा—तिमिरमभावस्वभावं द्रव्यगुणकर्मातिरिक्तत्वे सति कार्यत्वात् । १४ । विशेष्यैकदेशासिद्धो यथा—तिमिरमभावस्वभावं कार्यत्वे सति द्रव्यगुणकर्मातिरिक्तभावात् ।१५। सन्दिग्धैकदेशासिद्धो यथा— नायं पुमान् भवितुमर्हति सर्वज्ञो रागवक्तृत्वोपेतत्वात्। १६ । सन्दिग्धविशेष्यैकदेशासिद्धो यथा— नायं सर्वज्ञः पुरुषत्वे सति रागवक्तृत्वोपेतत्वात् । १७ । सन्दिग्धविशेषणैकदेशासिद्धो यथा— नायं सर्वज्ञो रागवक्तृत्वोपेतत्वे सति पुरुषत्वात् । १८ । व्यर्थैकदेशासिद्धो यथा— अग्निमानेष पर्वतः प्रकाशधूमवत्त्वात् ।१९। व्यर्थविशेषणैकदेशासिद्धो यथा— शब्दो गुणः प्रमेयत्वसामान्यवत्त्वे सति बाह्यैकेन्द्रियग्राह्यत्वात् । २० । व्यर्थविशेष्यैकदेशासिद्धो यथा— शब्दो गुणः, बाह्यैकेन्द्रियग्राह्यत्वे सति प्रमेयत्वसामान्यवत्त्वात् । २१ । भागासिद्धो यथा— अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् । न चात्र वाद्यादिसमुत्थशब्दानामपीश्वरप्रयत्नपूर्वकत्वात् कथं भागासिद्धिरित्यारेकणीयम् , प्रयत्नस्य हि मन्दतीव्रादिभावानन्तरं शब्दस्य तथाभावः प्रयत्नानन्तरीयकत्वं विवक्षामासीनम्। न चेश्वरप्रयत्नस्य नित्यत्वेन सम्भवति तीव्रादिभावः; ईश्वरमनभ्युपेयुषः प्रति वा भागासिद्धत्वं ज्ञेयम्।

२२ । व्यधिकरणासिद्धो यथा– शब्दोऽनित्यः पटस्य कृतकत्वात् पटस्य कृतकत्वं हि पटे विद्यमानं शब्दधर्मिकानित्यत्वाद् व्यधिकरणम् । २३ । एवमन्येपि भूयांसोऽसिद्धभेदाः प्राज्ञैः स्वयं विवेचनीयाश्चकासति ते कथं नाभ्यधिषत ? । कुत्र वाऽन्तर्विभावयिषांबभूवानाः ? अत्राह–

## विशेष्यासिद्ध्यादिस्तत्क्रोडीकृतः ॥ ४१ ॥

अयमर्थः, उक्तेष्वसिद्धभेदेषु ये हेत्वाभासतां भजन्ते ते वाद्यसिद्धत्वेन विवक्ष्यमाणा वाद्यसिद्धाः, प्रतिवाद्यसिद्धत्वेन विवक्ष्यमाणाः प्रतिवाद्यसिद्धाः, तदुभयासिद्धत्वेन पुनर्विवक्ष्यमाणा उभयासिद्धा वेदितव्याः । व्यधिकरणाश्रयासिद्धादयस्तु विचार्यमाणा न हेत्वाभासीभवितुं समुत्सासहयः, तथाहि– व्यधिकरणादपि पित्रोर्ब्राह्मण्यात् पुत्रे ब्राह्मण्यानुमानं सर्वजनप्रसिद्धम् ।

उवाच च भट्टोऽपि–

"पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा ।
सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते" ॥ १ ॥ इति ।

न चात्र नटभटादीनामपि ब्राह्मण्यं कस्मान्नेदं गमयतीति युक्तं वक्तुम्, पक्षधर्मोऽपि हि पर्वतद्रव्यत्वं पर्वते चित्रभानुं कथं नानुमापयतीति प्रत्याक्षेपे किमन्वेपेतोद्धरणम् ? । व्यभिचारादगमकत्वे तु समः समाधिः । ननु प्रतिभोहशक्त्याऽन्यथाभिधानेऽपि ब्राह्मणजन्यत्वादिति हेत्वर्थे प्रतिपद्य सुसंभवा तत्प्रतिपत्तिरिति चेत्तदप्यल्पीयः, एवं तु प्रतिभोहशक्त्यैव पटस्य कृतकत्वादित्यभिधानेऽपि पटस्य कृतकत्वेनानित्यत्वं दृष्टम्, एवं शब्दस्यापि नत एवास्त्विति प्रतिपत्तौ नायमपि व्यधिकरणः स्यात् तस्माद्यथोपात्तो हेतुस्तथैव तद्गमकत्वं चिन्तयितव्यम् । न च यस्मात् पटस्य कृतकत्वं तस्मादन्येनापि भवितव्यमनित्यत्वे-

नेत्यस्ति प्रतिबन्धः, अतोऽसौ व्यभिचारादेवागमकः, एवं प्रासाद एष धवलः काकीयायाः श्यामिकाया इत्याद्यपि द्रष्टव्यम् । कथं वा जलचन्द्रो नभश्चन्द्रस्य, कृत्तिकोदयो वा शकटोदयस्यानुमापकः स्यात् ? । अत्रत्यं तत्त्वं प्रागुक्तमेवेत्यन्यथानुपपत्त्यभाव एव हेत्वाभासत्वयोनिः, भवतु न वा पक्षधर्मत्वादि, न हि व्यभिचारित्वात्तद्गमकत्वाङ्गम् ।

एवमाश्रयासिद्धोऽपि न हेत्वाभासः कथमन्यथा "समस्ति समस्तवस्तुवेदी चन्द्रोपरागादिज्ञानान्यथानुपपत्तेः" इत्यादेर्गमकत्वमुपपादुकं स्यात् ? । न चास्य हेतोरसिद्ध आश्रयः, विकल्पात्तत्सिद्धेः । न च तत्सिद्धौ तत्सत्त्वस्यापि प्रतिपन्नत्वाद् वैयर्थ्यमनुमानस्य, वैयात्यादप्रतिपद्यमानं प्रति तस्यार्थवत्त्वात् । न च विकल्पादेव खरविषाणादेरपि सद्भावसम्भावनातोऽतिप्रसङ्गः; बाधकप्रत्ययविप्लावितसत्ताकवस्तुविषयत्वेन तस्य विभ्रमत्वात्, कथं तर्हि षष्ठभूतादेर्धर्मित्वमिति चेत् ?; धर्मिप्रयोगकाले बाधकप्रत्ययानुदयात् सत्त्वसम्भावनोपपत्तेः । अवश्यं चैतदभ्युपगमनीयम्, अन्यथा सर्वज्ञधर्मिणोऽसिद्धिरपि कथमिति प्राश्निकप्रश्नप्रत्याहतः किमुत्तरमन्वेषेत ? । ननु प्रमाणागोचरत्वादित्येव ब्रूमः, नन्वेवं तर्हि कुत्रायं हेतुरुपन्यस्त इति वक्तव्यम् ?। सर्वज्ञो नास्तीत्यत्र चेत् हन्त ! तर्हि सर्वज्ञधार्मिकनास्तित्वसाधने व्यापप्राणो विकल्पसिद्धिमेव भगवतीमुपासीनोऽभूः । अहो ! दारुणो मोहः स्ववाचा प्रतिपेदानोऽपि विकल्पसिद्धिमपजानीते इति ।

तथाचोक्तम्—

"विकल्पाद् धर्मिणः सिद्धिः क्रियतेऽथ निषिध्यते ।
द्विधापि धर्मिणः सिद्धिर्विकल्पात्ते समागता" ॥ १ ॥

द्वयमपि न करोमीति तु क्लीबवचनम्, विधिप्रातिषेधयोर्युगपद् विधानस्य प्रतिषेधस्य चासम्भवात्, यदि च द्वयमपि न करोषि

तदा व्यक्तममूल्यक्रयी कथं नोपहासाय जायसे ?; तथातायामाश्रयासिद्ध्युद्भावनायोगात् । ननु यदि विकल्पसिद्धेऽपि धर्मिणि गवेषणीयं प्रमाणं तदा प्रमाणप्रसिद्धेऽपि प्रमाणमन्वेषताम्, इतरथा विकल्पसिद्धेऽपि धर्मिणि पर्याप्तं प्रमाणान्वेषणेन, अहमहमिकया प्रमाणलक्षणपरीक्षणं परीक्षकाणामकक्षीकरणीयं च भवेत्, तावन्मात्रेण सर्वस्यापि सिद्धेरिति चेत् ?। तुच्छमेतत्, विकल्पाद्धि सत्त्वासत्त्वसाधारणं धर्मिमात्रं प्रतीयते, न त्वस्ति तावन्मात्रेण तदस्तित्वस्यापि प्रतीतिः, यतोऽनुमानमपार्थकं स्यात्, अन्यथा सानुमत्साक्षात्कारे कृशानुमत्त्वसाधनमनर्थकं स्यात् । तस्याग्निमतो वाऽनग्निमतो वा प्रत्यक्षेणैव प्रेक्षणात् । अग्निमत्त्वाऽनग्निमत्वविशेषशून्यस्य क्षोणीधरमात्रस्य प्रत्यक्षेण परिच्छित्तेः कुतोऽनुमानापार्थक्यमिति चेत् ?। तर्हि अस्तित्वनास्तित्वविशेषशून्यस्य सर्वज्ञमात्रस्य विकल्पेनाऽऽकलनात् कथमत्रापि वैयर्थ्यमनुमानस्य स्यात् ? । अस्तित्वनास्तित्वव्यतिरेकेण कीदृशी सर्वज्ञमात्रासिद्धिरिति चेत् ? । अग्निमत्त्वानग्निमत्त्वव्यतिरेकेण कीदृशी धराधरमात्रसिद्धिः ?; इत्याचक्षीत । "पृथ्वीधरोऽयम्" इत्येतावन्मात्रज्ञप्तिरेवेति चेद्, अन्यत्रापि सर्वज्ञः, इत्येतावन्मात्रज्ञप्तिरेवास्तु । इयांस्तु विशेषः, एका किल प्रमाणोपपन्नत्वात् प्रामाणिकी, इतरा पुनर्विपर्ययाद्वैकल्पिकीति ।

ननु किमनेन दुर्भगाभरणभारायमाणेन विकल्पेन प्रामाणिकः कुर्यादिति चेत् ? । तदसत्, प्रामाणिकोऽपि हि षट्तर्कीपरितर्ककर्कशशेमुषीविशेषसङ्ख्यावद्विराजिराजसभायां "खरविषाणमस्ति नास्ति वा" ?, इति साक्षेपं केनापि प्रसर्पद्दर्पोद्धुरकन्धरेण प्रत्याहतोऽवश्यं पुरुषाभिमानी किञ्चिदालपेत्, न पुनस्तुष्णीमेव तदानीं पुष्णीयात् । अप्रकृतं च किमपि प्रलपन् सनिकारं निःसारितः स्यात् । प्रकृतभाषणे तु विहाय विकल्पसिद्धं धर्मिणं काऽन्या गतिरास्ते ?; इति चिन्तनीयम् । अप्रामा-

णिके वस्तुनि मूकवावदूकयोः कतरः श्रेयानिति स्वयमेव प्राज्ञैर्विवेच्यतामिति चेत्?। ननु भवान् स्वोक्तस्यैव तावद्विवेचनेऽवदधीत, मूकतैव श्रेयसीति च पूत्करोति निष्प्रमाणके वस्तुनीति विकल्पसिद्धधर्मिणं विधाय मूकताधर्मं च विदधातीत्यात्मानं मा स्म विस्मरः, तस्मात्प्रामाणिकेनाप्युररीकरणीयैव क्वचिद्‌ विकल्पसिद्धिः।

न चासावेव भवतु सर्वत्र कृतं प्रमाणेनेति वाच्यम्; तदन्तरेण नियतव्यवस्थानुपपत्तेः। एको विकल्पयति "अस्ति सर्वज्ञः" इति, अन्यः पुनः "नास्ति" इति किमत्र प्रतिपत्तव्यम्? प्रमाणमुद्राव्यवस्थापिते त्वेकतरस्मिन्धर्मे दुर्धरोऽपि कः किं कुर्यात्?। प्रमाणसिद्ध्यनर्हे तु धर्मिणि सर्ववेदिगगनकुसुमादौ विकल्पसिद्धिरपि साधीयसी तर्कव्यवसानिनामपि तथाव्यवहारदर्शनात्। एवं च नाश्रयासिद्धो हेत्वाभास इति स्थितम्।

न चैवं विश्वस्य परिणामिकारणत्वादित्यादेरपि गमकत्वमापद्येतेति युक्तम्, अस्य स्वरूपासिद्धेः, प्रधानस्यासिद्धत्वेन विश्वस्य तत्परिणामित्वासिद्धेः। आश्रयैकदेशासिद्धोऽपि हेत्वाभास एवमेव प्रत्यवाचि; प्रधानात्मानौ नित्यौ अकृतकत्वादित्यत्र तु आद्यन्तविरहमात्रस्य नित्यत्वपदार्थतया तस्य प्रधानेऽत्यन्ताभावरूपे तदभाववादिभिरङ्गीकाराद्‌ न क्षतिः।

एवं सन्दिग्धाश्रयासिद्धोऽपि न हेत्वाभासः, हेतोः साध्येनाविनाभावविभावात्, धर्म्यसिद्धिस्तु पक्षदोषः, साध्यधर्मविशिष्टतया प्रसिद्धो हि धर्मी पक्षः प्रोच्यते। न च सन्देहास्पदीभूतस्यास्य समस्ति प्रसिद्धिः, नातः पक्षदोषेणैव गतत्वाद्‌ हेतुदोषो युज्यते वदितुम्। एवं पुनः सन्दिग्धाश्रयैकदेशासिद्धोऽपि तथैव वेदितव्यः। आश्रयसन्दिग्धवृत्त्यसिद्धोऽपि न शोभनः, यदि हि पक्षधर्मत्वं गमकत्वाङ्गत्वेनाऽऽतस्थानं स्यात् स्यादेष तदानीं दोषः, न चैवम्, तत्किमाश्रयवृत्त्यनिर्णयेऽपि केकायितात् प्रातिनियतदे-

शाऽधिकरणमयूरसिद्धिर्भवतु ?, नैवम्, केकायितमात्रं हि मयूरमात्रेणैवाविनाभूतं निश्चितमिति तदेव गमयति, देशविशेषविशिष्टमयूरसिद्धौ तु देशविशेषविशिष्टस्यैव केकायितस्याविनाभावनिर्णयोऽपेक्ष्यते इति केकायितमात्रस्य तद्व्यभिचारसम्भवादेव गमकत्वाभावः ।

एवमेवाश्रयैकदेशसन्दिग्धवृत्तिरप्यसिद्धो न भवति । व्यर्थविशेष्यविशेषणासिद्धावपि नासिद्धविधी, वक्तुरकौशलमात्रत्वाद् वचनवैयर्थ्यदोषस्य । एवं व्यर्थैकदेशासिद्धादयोऽपि विज्ञेयाः । ततः स्थितमेतत्, एतेष्वसिद्धभेदेषु सम्भवन्त उभयान्यतरासिद्धयोरन्तर्भूण्णव इति ।

नन्वन्यतरासिद्धो हेत्वाभास एव नास्ति तथाहि— परेणासिद्ध इत्युद्भाविते वादी यदि न तत्साधकं प्रमाणमभिदधीत तदा प्रमाणाभावादुभयोरप्यसिद्धः । अथाभिदधीत, तदाऽपक्षपातित्वात्प्रमाणस्योभयोरपि सिद्ध एव । अथ यावन्न परं प्रति प्रसाध्यते प्रमाणतः, तावत्तं प्रत्यसिद्ध इति चेत्, तर्हि गौणमसिद्धत्वम्, न हि रत्नादिपदार्थस्तत्त्वतोऽप्रतीयमानस्तावन्तमपि कालं मुख्यतस्तदाभासः । किञ्च । अन्यतरासिद्धो यदा हेत्वाभासस्तदा वादी निगृहीतो भवेत्, न च निगृहीतस्य पश्चादनिग्रह इति युक्तम्, नापि हेतुसमर्थनं पश्चादुचितम्, निग्रहान्तत्वाद्वादस्येति । अत्रोच्यते, यदा वादी सम्यग् हेतुत्वं प्रतिपद्यमानोऽपि तत्समर्थनन्यायविस्मरणादिनिमित्तेन प्रतिवादिनं प्राश्निकान् वा प्रतिबोधयितुं नाधीष्टे, असिद्धतामपि नानुमनुते तदान्यतरासिद्धत्वेनैव निगृहीतो भवति । तथा स्वयमनभ्युपगच्छमानोऽपि परस्य सिद्ध इत्येतावतैवोपन्यस्तो हेतुरन्यतरासिद्धो निग्रहाधिकरणम्, यथा साङ्ख्यस्य जैनं प्रत्यचेतनाः सुखादय उत्पत्तिमत्वाद् घटवत्; इति सिद्धमुभयान्यतरासिद्धाभ्यां द्वेधाऽसिद्धो हेत्वाभासः, सर्वे च सम्भवन्तोऽसिद्धविधयस्तत्रान्तर्भवि-

तार इति ॥ ४१ ॥

अथ विरुद्धं निर्वक्ति—

## अन्यथैवोपपन्नो विरुद्धः ॥ ४२ ॥

साध्यं विनैवोपपन्नः अन्यथैवोपपन्नो विरुद्धो हेत्वाभासः सर्वथा साध्यसामानाधिकरण्यपराङ्मुखः साध्याभावव्याप्य इति यावद् । यथा शब्दो नित्यः कार्यत्वात् । तुरङ्गोऽयं विषाणित्वात् । बुद्धिमत्पूर्वकं क्षित्यादि कार्यत्वात् । अत्र चाशरीरसर्वज्ञपूर्वकत्वे साध्ये कार्यत्वं विरुद्धसाधनाद् विरुद्धमिति ॥ ४२ ॥

अन्येऽप्यन्याभिहिता विरुद्धभेदा उक्तलक्षणेनैव सङ्ग्रहाणा इत्युपदर्शयन्नाह—

## सपक्षसत्त्वाऽसत्त्वे पक्षविपक्षव्यापकादिस्तत्प्रपञ्चः ॥ ४३ ॥

तत्र सपक्षसत्त्वे चतुर्षु विरुद्धेषु आद्यः पक्षविपक्षव्यापको यथा– नित्यः शब्दः कार्यत्वात्, सपक्षोऽत्र चतुर्ष्वपि गगनादिर्नित्यः । स्वकारणसमवायः कार्यत्वम्, उत्पादविनाशोपलक्षिता सत्ताऽनित्यत्वमित्येकेषामभिसन्धिः, तदभिसन्धिना प्रागभावस्यापि नित्यत्वेन युक्तं विरुद्धोदाहरणम्, अन्यथा कार्यत्वं विपक्षव्यापि न स्यात् । यदात्वादिमत्त्वमेव कार्यत्वम्, तदा प्रध्वंसस्य नित्यत्वेऽपि कार्यत्वमस्तीत्यनैकान्तिकं स्याद् न विरुद्धमिति, अयं च हेतुः पक्षे शब्दे विपक्षे घटादौ व्याप्य वर्त्तते ।१।

विपक्षैकदेशवृत्तिः पक्षव्यापको यथा– नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबहिरिन्द्रियग्राह्यत्वात्, अर्हत्यर्थे कृत्प्रत्ययाभिधानाद् ग्रहणयोग्यत्वमात्रं ग्राह्यत्वं बोध्यम्, तेनाऽस्य पक्षव्यापकत्वं नानुपपन्नम्, विपक्षे तु घटादौ समस्ति न

पुनः सुखादौ । २ ।

पक्षविपक्षैकदेशवृत्तिर्यथा— शब्दो नित्यः प्रयत्ननान्तरीयकत्वात्, अयं हेतुः पुरुषादिशब्देऽस्ति न वाय्वादिशब्दे, घटादौ विपक्षेऽस्ति न तडिदादौ । ३ ।

पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा— नित्या पृथ्वी कृतकत्वात्, कृतकत्वं द्व्यणुकादावस्ति न परमाणुषु विपक्षे तु घटादौ सर्वत्र व्याप्यवृत्तीति । ४ ।

अथासति सपक्षे चत्वारो विरुद्धाः । तत्र पक्षविपक्षव्यापको यथा— शब्दो गगनविशेषगुणः प्रमेयत्वात्, अत्र चतुर्ष्वपि गगने विशेषगुणान्तरस्याभावात् सपक्षासत्त्वम्, अयं च पक्षे शब्दे विपक्षे रूपादौ व्याप्यवृत्तिः । ५ ।

पक्षविपक्षैकदेशवृत्तिर्यथा— तत्रैव पक्षे प्रयत्नानन्तरीकत्वादिति, अयं हि हेतुः पक्षे पुरुषादिशब्दे एव विपक्षे च रूपादावेवाऽस्ति, न तु वाय्वादिशब्दे विद्युदादौ च । ६ ।

पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा— तत्रैव पक्षे बाह्येन्द्रियग्राह्यत्वात्, बाह्येन्द्रियग्राह्यत्वं शब्दव्यापी धर्मः, विपक्षे पुना रूपादावेवास्ति न तु सुखादौ । ७ ।

विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा— तत्रैव पक्षे अपदात्मकत्वात्, इति विपक्षमात्रव्याप्ययं हेतुः, वर्णात्मके तु पक्षैकदेशेऽस्ति नान्यत्र । ८ । इति ।

पक्षव्यापकेषु चैषु चतुर्षु विरुद्धता, परिशेषेषु पुनरसिद्धविरुद्धत्वोभयसमावेश इति ॥ ४३ ॥

अनैकान्तिकं लक्षयति—

## अन्यथोपपन्नोऽनैकान्तिकः ॥ ४४ ॥

पूर्वत्रैवकारादन्यथापदानन्तरमिह सामर्थ्याद् अपि पदार्थानुसन्धिः, अन्यथाऽपि साध्याभावेऽप्युपपन्नोऽनैकान्तिको हेत्वा-

भास इत्यर्थः, अनैकान्तिको हि क्वचिदवश्यं साध्यसामानाधिकरण्यमप्यनुभवितुं समुत्सासहिः, अयमेव किल विरुद्धानैकान्तिकयोर्भेदः । साध्याभाववद्वृत्तित्वं च निश्चितं भवतु सन्दिग्धं वा, उभयथाप्यनैकान्तिकत्वावकाशः, तत्र निश्चितं यथा– अनित्यः शब्दः प्रमेयत्वात्, इति अत्र हि अनित्यत्वरूपसाध्याभाववत्सु गगनादिनित्यपदार्थेषु घटाद्यनित्यत्वसामानाधिकरण्यानुभवबन्धुरं प्रमेयत्वं निश्चितमेव वृत्तिमत् । संदिग्धं यथा– विवादापन्नः पुमान् सर्वज्ञो भवितुं नार्हति वक्तृत्वात्, इति अत्र वक्तृत्वं विपक्षे सर्वज्ञे सन्देहास्पदीभूतम्, "सर्वज्ञो वक्ता आहोस्विन्न" इति सन्देहात्, एवं स श्यामो मैत्रपुत्रत्वादित्याद्यप्युदाहरणीयम् ॥ ४४ ॥

ये तु पक्षसपक्षविपक्षव्यापकादयो भेदा अन्यैर्जल्पितास्तेऽप्युक्तलक्षणानतिरिक्ता इत्याह–

पक्षसपक्षविपक्षव्यापकादि-
स्तदन्तःपाती ॥ ४५ ॥

तत्र पक्षसपक्षविपक्षव्यापको यथा– शब्दोऽनित्यः प्रमेयत्वात् । प्रमेयत्वं हि सर्वत्रान्वयि । १ ।

पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा– तत्रैव पक्षे प्रत्यक्षत्वं हेतुः, प्रत्यक्षत्वं चात्रास्मदादीन्द्रियग्रहणयोग्यतामात्रमभिप्रेतम्, ततो नास्य पक्षत्रयव्यापित्वम्, न वा पक्षैकदेशवृत्तित्वमासज्यते। पक्षीभूते शब्दे प्रत्यक्षत्वं सर्वत्रास्ति न सपक्षविपक्षयोः, घटादौ सामान्यादौ च भावाद् द्व्यणुकादौ खादौ चाभावात् । २ ।

पक्षसपक्षव्यापी विपक्षैकदेशवृत्तिर्यथा– गौरयं विषाणित्वात्, विषाणित्वं सर्वगोवृत्ति गोत्वशून्ये महिषादौ चास्ति घोटकादौ च नास्तीति विपक्षैकदेशवृत्ति । ३ ।

पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा– नायं गौर्विषा-

णित्वात् , अयं हेतुः पक्षीभूतं गवयं विपक्षं च गोमात्रं व्याप्नोति, गोत्वाभाववति च महिषादौ भावेऽपि तुरङ्गमादावभावात् सपक्षैकदेशवृत्तिः । ४ ।

पक्षसपक्षविपक्षैकदेशवृत्तिर्यथा— नित्या पृथ्वी प्रत्यक्षत्वात् , प्रत्यक्षत्वं हि घटादौ पक्षे भावेऽपि परमाण्वादावभावात् पक्षैकदेशवृत्ति, नित्ये सामान्यादौ सपक्षे भावेऽपि गगनादावभावात् सपक्षैकदेशवृत्ति, अनित्ये बुद्बुदादौ विपक्षे भावेऽपि जलीयद्व्यणुकादौ विरहेण विपक्षैकदेशवृत्ति । ५ ।

पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापी यथा— दिक्कालमनांसि द्रव्याणि अमूर्त्तत्वात् , अमूर्तत्वं हि पक्षीभूतयोर्दिक्कालयोरस्ति न तु मनासि, तस्य मूर्त्तत्वात् ; सपक्षे गगनादावस्ति, न घटादौ, विपक्षं तु गुणादिकं व्याप्नोति । ६ ।

पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा— न द्रव्याणि दिक्कालमनांसि अमूर्तत्वात् , अत्र हि अमूर्त्तत्वं पक्षे मनसि नास्ति विपक्षे घटादौ नास्ति व्योमादौ त्वस्ति सपक्षं तु गुणादिकं व्याप्नोति । ७ ।

सपक्षविपक्षव्यापी पक्षैकदेशवृत्तिर्यथा— न द्रव्याणि गगनकालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वात् ; अयं हेतुः सपक्षं गुणादिकं विपक्षं पृथ्व्यप्तेजोवायुरूपं च व्याप्नोति पक्षे तु कालदिग्मनःसु वर्त्तते नात्माऽऽकाशयोः ; । ८ । इत्येवमष्टावनैकान्तिका एव हेत्वाभासा इति ॥ ४५ ॥

ननु कथं त्रय एवासिद्ध— विरुद्धा-ऽनैकान्तिका हेत्वाभासाः ?। यावताऽकिञ्चित्कराख्यश्चतुर्थो हेत्वाभासो वर्त्तत एव नयाटैर्लेपानः, तथाहि— अप्रयोजको हेतुरकिञ्चित्करः स द्विविधः सिद्धसाधनः, बाधितविषयश्च, तत्राद्यो यथा— शब्दः श्रावणो भवितुमर्हति शब्दत्वादिति, अत्र हि श्रावणत्वस्य साध्यस्य शब्दनिष्ठत्वेन सिद्धत्वाद्ध हेतुः सिद्धसाधनोऽप्रयोजकः । बाधितविषयस्त्व-

नैकधा. तत्र कश्चित् प्रत्यक्षबाधितविषयो यथा- कृशानुरनुष्णो द्रव्यत्वादिति. अत्र द्रव्यत्वहेतोर्विषयस्तथाभिमतस्याऽनुष्णत्वस्योष्णत्वग्राहिणा प्रत्यक्षेण बाधात् बाधितविषयत्वम् । एवमनुमानागमस्ववचनादिबाधितविषयत्वं हेतूनां द्रष्टव्यम्; इत्ययं कथं नोक्तः ? । कथं च नैयायिकैरभिमतयोः कालातीतप्रकरणसमयोः हेत्वाभासानुपेक्षावभूतानां ? । आह हि यन्मुनिर्गौतमः- "कालात्ययापदिष्टः कालातीतः" इति ।

"यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः" इति;

अत्राह—

## अकिञ्चित्कर-कालातीत-प्रकरणसमा उक्तानतिरिक्ताः ॥ ४९ ॥

एते त्रयो हेत्वाभासाः पराभिमता उक्तेभ्योऽसिद्धादिभ्यस्त्रिभ्यो हेत्वाभासेभ्योऽनतिरिक्तास्तदन्तर्भावित्वात् एवेत्यर्थः । तथाहि- "सिद्धे प्रत्यक्षबाधिते च साध्ये हेतुरकिञ्चित्करः" इति माणिक्यनन्दिसूत्रम्, तत्र द्विविधस्याप्यस्य अधिगतबाधितसाध्यधर्मविशेषणपक्षाभासभेदान्तर्भावात् न हेत्वाभासता यौक्तिकी ।

न च पक्षदोषसद्भावेऽवश्यं हेतुदोषोऽपि वक्तव्य इत्यस्ति कश्चिद्राज्ञो निदेशः, इतरथा दृष्टान्तादिदोषस्याप्यवश्यवाच्यत्वप्रसङ्गात्, इति पक्षदोषेणैवाऽनुमानदौष्ट्ये न स्वलक्षणोपपन्नस्य हेतोः स्वजातिबहिष्कारो न्याय्यः । प्रत्यक्षादिबाधितसाध्यस्थले तु स्वलक्षणाविनाभावाभावादेव हेत्वाभासतामनुपजन्नुक्तहेत्वाभासत्रिकान्यतमस्मिन्नेवान्तःपतति । एतेन कालातीतोऽपि प्रत्युक्त एव प्रत्यक्षागमबाधितधर्मिनिर्देशानन्तरप्रयुक्तो हि हेतुः कालातीतः, यथा- अनुष्णः तेजोवयवी कृतकत्वात् कुम्भवत्,'

इति । तथा चोक्तप्रकारेणास्य पक्षाभासदोषेणैव चारितार्थ्ये न हेत्वाभासान्तरताबीजमुत्पश्यामः । प्रकरणसमस्तु सम्भवत्येव न, असिद्धादौ वान्तर्भावनीयः; उक्तं चात्रत्यं पूर्वमित्यधिकहेत्वाभासपरिहारेण त्रय एव हेत्वाभासा इति स्थितम् ॥ ४६ ॥

उक्ता हेत्वाभासाः । अथ दृष्टान्ताभासानाह––

## साधर्म्येण वैधर्म्येण चाष्टौ दृष्टान्ताभासाः।४७।

दृष्टान्तलक्षणशून्यास्तद्वदाभासमाना दृष्टान्ताभासाः, ते च साधर्म्येणाष्टौ भवन्ति वैधर्म्येण चाष्टौ भवन्ति ।

अत्र साधर्म्येण वैधर्म्येणेत्यसमासकरणं प्रत्येकरूपेणाष्टविधत्वज्ञापनार्थम्, अपरथोभयरूपेणाष्टविधत्वं ज्ञायेतेति ॥४७॥

तत्र साधर्म्येणाष्टप्रकारान् ब्रूते––

## प्रथमे साध्य-साधनोभय-विकल-संदिग्ध-साध्य-साधनोभया-ऽप्रदर्शित-विपरीतान्वयाः ॥ ४८ ॥

प्रथमे साधर्म्येणाष्टौ प्रकाराः । साध्यविकलः १ साधनविकलः २ तदुभयविकलः ३ संदिग्धसाध्यः ४ संदिग्धसाधनः ५ संदिग्धोभयः ६ अप्रदर्शितान्वयः ७ विपरीतान्वय ८ श्चेति ।

तत्राद्यो यथा– शब्दोऽपौरुषेयः अमूर्तत्वाद् दुःखवत्, अत्र दुःखस्य पुरुषव्यापारेणैवोद्भवात् पौरुषेयस्याऽपौरुषेयत्वाभावः ।

द्वितीयो यथा– तत्रैव प्रतिज्ञायां तत्रैव च हेतौ परमाणुर्मूर्तत्वात् साधनविकलो दृष्टान्ताभासः ।

तृतीयो यथा– तत्रैव प्रतिज्ञायां तत्रैव च हेतौ घटः पौरुषेयो मूर्तश्चेति साध्यसाधनोभयविकलः ।

तुरीयो यथा– रागादिमानयं वक्तृत्वात् चैत्रवत्, अत्र चैत्रे रागादि सन्देहास्पदीभूतम्, परचेतोविकाराणां परोक्षत्वात् तदव्यभिचारिलिङ्गानुपलब्धेश्च ।

पञ्चमो यथा– मरणधर्माऽयं रागादिमत्त्वाद् यज्ञदत्तवत्, अत्र साधनं दृष्टान्ते सन्दिग्धम् ।

षष्ठो यथा– नायं सर्वज्ञो रागादिमद्भावाद् मुनिविशेषवत्, अत्र मुनिविशेषे साधनस्य साध्यस्य च संशयः ।

सप्तमो यथा– शब्दोऽनित्यः कृतकत्वाद् घटवत्, अस्तीह यद्यपि वास्तवो-ऽन्वयस्तथापि यादिना वचनेन न प्रकटीकृतः, इत्यप्रदर्शितान्वयो दृष्टान्तः, यद्यपि नात्र वस्तुनिष्ठो कश्चिद्दोषस्तथापि परार्थानुमाने वचनगुणदोषानुसारेण वक्तृगुणदोषौ परीक्ष्यौ भवत इति भवत्यस्य वाचनिकं दुष्टत्वम्, एवमुत्तरत्रापि ।

अष्टमो यथा– शब्दोऽनित्यः कृतकत्वाद् यदनित्यं तत्कृतकं घटवदिति । अत्र विपरीतोऽन्वयः प्रसिद्धानुवादेन हि अप्रसिद्धं विधीयते प्रसिद्धं चात्र कृतकत्वम्, हेतुभावेन निर्देशात्, अप्रसिद्धं तु अनित्यत्वं साध्यतयोपादानादिति प्रसिद्धस्य कृतकत्वस्यैवानुवादसर्वनाम्ना यच्छब्देन निर्देशो युज्यते न पुनरप्रसिद्धस्यानित्यत्वस्य, अनित्यत्वस्यैव च विधिसर्वनाम्ना तच्छब्देन युक्तिमान् परामर्शो न तु कृतकत्वस्य तथा च यत्कृतकं तदनित्यमिति रचनौचितीमञ्चतीति ॥ ४८ ॥

वैधर्म्येणाष्टौ दृष्टान्ताऽऽभासानाह—

## चरमेऽसिद्धसाध्य-साधनोभय-सन्दिग्ध-साध्य-साधनोभया-ऽप्रदर्शित-विपरीत-व्यतिरेकाः ॥ ४९ ॥

चरमे अन्त्या वैधर्म्येणाष्टौ दृष्टान्ताभासाः । असिद्ध-

साध्यव्यतिरेकः १ असिद्धसाधनव्यतिरेकः २ असिद्धोभयव्यतिरेकः ३ सन्दिग्धसाध्यव्यतिरेकः ४ सन्दिग्धसाधनव्यतिरेकः ५ सन्दिग्धोभयव्यतिरेकः ६ अप्रदर्शितव्यतिरेकः ७ विपरीतव्यतिरेक ८ श्चेति।

तत्राद्यो यथा— भ्रान्तमनुमानं प्रमाणत्वाद् यत्पुनर्भ्रान्तं न भवति न तत्प्रमाणं यथा स्वप्नज्ञानमिति, अत्र स्वप्नज्ञानेऽपि भ्रान्तभावेन साध्यव्यतिरेकोऽसिद्धः।

द्वितीयो यथा— प्रत्यक्षं निर्विकल्पं प्रमाणत्वाद् यत्तु न तथा तद् न प्रमाणं यथा लैङ्गिकम्, अत्र लैङ्गिकप्रत्यये प्रमाणत्वसत्त्वादसिद्धः साधनव्यतिरेकः।

तृतीयो यथा— शब्दो नित्यानित्यः सत्त्वाद् यन्नित्यानित्यं न भवति तत्सद् न भवति कुम्भादिवत्, अत्र कुम्भादौ नित्यानित्ये सति च साध्यसाधनव्यतिरेकासिद्धिः।

तुर्यो यथा— असर्वज्ञोऽनाप्तो वा कपिलः, अक्षणिकैकान्तवादित्वात्, यः पुनर्न तथा नासौ तथा; यथा सुगतः, अत्र सुगतेऽसाध्यधर्मनिवृत्तेः सन्देहः। अयं च परमार्थतोऽसिद्धसाध्यव्यतिरेक एव, क्षणिकैकान्तस्य प्रमाणबाधेन तदभिधातुरसर्वज्ञत्वानाप्तत्वप्राप्तेः, केवलं तद्बाधकप्रमाणपरामर्शशून्यानां प्रमातॄणां सन्दिग्धसाध्यव्यतिरेकत्वेनाभास इति तथैवाभाषि।

पञ्चमो यथा—अनादेयवचनः कश्चन जनो रागादिभावाद् यः पुनरादेयवचनो नासौ तथा, यथा शौद्धोदनिः; अत्र दृष्टान्ते साधनव्यतिरेकः सन्दिग्धः।

षष्ठो यथा— अवीतरागः कपिलः करुणास्पदेष्वपि परमकृपयानर्पितनिजपिशितशकलत्वाद् यस्तु वीतरागोऽसौ परमकृपया कृपापात्रेषु समर्पितनिजपिशितशकलः, यथा तपनबन्धुः, अत्र साध्यसाधनोभयसंशयो दृष्टान्ते।

सप्तमो यथा—शब्दोऽनित्यः कृतकत्वाद् व्यतिरेके गगनम्,

अत्र यदनित्यं न भवति तन्न कृतकम्, इत्येवं विद्यमानोऽपि व्यतिरेको नोपादर्शि ।

अष्टमो यथा— शब्दोऽनित्यः कृतकत्वाद् यदकृतकं तन्नित्यं यथा गगनम्, अत्र यदनित्यं न भवति नेदं कृतकं भवतीति युक्तं वक्तुमिति ।

उक्तो दृष्टान्ताभासः । अथोपनयनिगमनाभासावसरः, तत्रोपनयलक्षणातिक्रान्तं वचनमुपनयाभासः । यथा— परिणामी शब्दः कृतकत्वाद् यः कृतकः स परिणामी यथा कुम्भ इत्यत्र परिणामी च शब्दः इति कृतकश्च कुम्भ इति चेति, इह हि साध्यधर्मं साध्यधर्मिणि साधनं दृष्टान्तधर्मिणि वोपसंहरत उपनयाभास इति ।

एवं निगमनलक्षणमतिलङ्घितवद्वचनं निगमनाभासः । यथोक्त एव प्रयोगे तस्मात् कृतकः शब्द इति तस्मात् परिणामी कुम्भ इति चेति; अत्रापि साधनधर्मं साध्यधर्मिणि साध्यधर्मं दृष्टान्तधर्मिणि वोपसंहरतो निगमनाभासः ।

एवं पक्षशुद्ध्याद्यवयवपञ्चकस्य क्रमतो वैपरीत्यप्रयोगे तदाभासपञ्चकमपि तर्कणीयमिति ॥ ४९ ॥

उक्तमनुमानम् । इदानीं तत्प्रयोगभूमिभूतं वस्तुनिर्णयाभिप्रायोपक्रमं वादं वदति—

## विजिगीषया तत्त्वनिर्णिनीषया वा साधनदूषणवदनं वादः ॥ ५० ॥

परं विजेतुमिच्छा विजिगीषा, तत्त्वं निर्णेतुं 'सर्वोऽपि धात्वर्थः कृधात्वर्थेन व्याप्तः' इति निर्णयं कर्त्तुमिच्छा तत्त्वनिर्णिनीषा, सा च द्विधा, स्वात्मनि परात्मनि च । वाशब्द उभाभ्यां सहिताभ्यां वादः प्रवर्त्तते, अन्यतरयापीत्याह, तथाहि वि-

जिगीषुणा सह परत्र तत्त्वनिर्णिनीषोर्वादे उभयसाहित्यमस्ति, एको हि तत्रान्यं विजिगीषते अन्यश्चामुं तत्त्वं निर्णीतवन्तं चिकीर्षति, यत्र च द्वावपि विजिगीषू वादिप्रतिवादिनौ, तत्र विजिगीषामात्रम्, यत्र पुनः परत्र तत्त्वनिर्णिनीषू अपि द्वौ, एकः स्वात्मनि परश्च परत्र तत्त्वनिर्णिनीषुर्वा तत्र तत्त्वनिर्णिनीषामात्रम्, एतेन विजयस्तत्त्वनिर्णयो वा वादस्य प्रयोजनमतिरोहितं भवति । अथ वादस्वरूपमाह– " साधनदूषणवदनम्, इति, स्वपक्षविषयं साधनं परपक्षविषयं दूषणम्, स्वपक्षसिद्धये वादिनः साधनं तत्प्रतिषेधाय प्रतिवादिनो दूषणम्, प्रतिवादिनोऽपि स्वपक्षसिद्धये साधनं तत्प्रतिषेधाय वादिनो दूषणमित्येवं वादिनः साधनदूषणे प्रतिवादिनः साधनदूषणे च, तयोर्वादिप्रतिवादिभ्यां वदनं वचनं वादः । साधनदूषणवचने च प्रमाणरूपे एव भवतः तदितरयोस्तयोस्तदाभासत्वात्; न हि ताभ्यां वस्तु साधयितुं दूषयितुं वा भवति शकनीयम् ।

ननु यत्रैव धर्मिणि एकतरधर्मन्यासेधेन तदन्यतरधर्मव्यवस्थापनार्थं वादिनः साधनवचनं तत्रैव पुनः प्रतिवादिनस्तद्विपरीतं दूषणवचनं कथं सङ्गतिं गाते इति चेत् ? । न, स्वाभिप्रायानुसारेण हि वादिप्रतिवादिभ्यां तथा साधन-दूषणवचने को विरोधः ? । पूर्वं हि वादी साधनमाख्याति स्वाभिप्रायेण, पश्चात्प्रतिवादी स्वाभिसन्धिना दूषणमाविष्करोति, न खल्वत्र साधनं दूषणं चैकत्रैव धर्मिणि तात्त्विकमस्तीति विवक्षा किन्तु स्वस्वाशयेन वादिप्रतिवादिनोस्तथा प्रयोगः ॥

ननु विजिगीषया साधन-दूषणवदनं वाद इति दुर्मर्षणं विजिगीषुर्हि स्वाभिमततत्त्वसंरक्षणमेव प्रयोजनमुद्दिश्य वादे प्रवर्त्तते, न च तत्प्रयोजनं वादनिष्पाद्यम्, तस्य निग्रहस्थानशून्यत्वात्, तस्माद् विजिगीषया प्रवर्त्तमाना कथा वादातिरिक्तैव जल्पलक्षणा वितण्डालक्षणा चाऽभ्युपेया, यदाह मुनिरक्षपादः–

"तत्त्वाध्यवसायसंरक्षणार्थं जल्प-वितण्डे. बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" इति तन्मन्दम् । वादस्यापि निग्रह-स्थानवत्त्वेन तत्त्वसंरक्षणार्थत्वात् तदर्थेन प्रवृत्ताया अपि कथाया वादत्वाऽपरिहाणात्; न चास्यासिद्धं निग्रहस्थानवत्त्वम् "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्ष-प्रतिपक्षपरिग्रहो वादः" इति गौतमीयवादलक्षणसूत्रे "सिद्धान्ताविरुद्ध" इत्यंशेनापसिद्धान्तस्य "पञ्चावयवोपपन्न" इत्यंशेन च न्यूनाधिकयोर्हेत्वाभासपञ्चकस्य चाभ्यनुज्ञानात् तेषां च नि-ग्रहस्थानान्तरोपलक्षणत्वाद् नातो जल्प-वितण्डे कथे, वादेनैव चारितार्थ्यात् । ननु "यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः" ॥ "स प्रतिपक्षस्थापनाहीना वितण्डा" इत्येतद् द्विसूत्री सिद्धे जल्प-वितण्डे अपि कथे गौतमर्षिरदर्शदिति कथम्? । अस्तु यथा तथा, युक्तिभगवतीप्रसादलब्धात्मार्थाभ्युपगमव्यसनिन एव तु महात्मानः, न हि भवितुमर्हति वितण्डायाः कथात्वम्, वैतण्डिको हि स्वपक्षमभ्युपगम्यास्थापयन् यत्किञ्चिद् वादेन परपक्षमेव प्रत्याचक्षाणः कथमवधेयवचनः?। जल्पस्तु यद्यपि द्वयोरपि वादिप्रतिवादिनोः साधनोपालम्भसम्भावनया कथापदवीं समायाति, तथापि वादान्नार्थान्तरम्, तदर्थस्य तेनैव सिद्धेः, छलजातिनिग्रहस्थानभूयस्त्वयोगादचारितार्थ्यमिति चेत् । न, छलजातिप्रयोगस्य दूषणाभासत्वेनाप्रयोज्यत्वाद् निग्रहस्थानानां च वादेऽप्यवकाशाद्, न खलु खटचपेटामुखबन्धादयोऽनुचिता निग्रहाः जल्पेऽप्युपयुज्यन्ते, उचितानां च निग्रह-स्थानानां वादेऽप्यविरोधः; नातः कश्चिद्वादाज्जल्पविशेषः, लाभ-पूजाख्यातिकामितादिकानि तु विजिगीषुवादिनः प्रयोजनानि तत्त्वाध्यवसायसंरक्षणलक्षणतत्प्रधानफलानुबन्धीनि पुरुषधर्म-त्वाद् वादेऽप्यशक्यपरिहाराणि । ननु छलजातिप्रयोगोऽ-सदुत्तरत्वात् वादेनोपयुज्यते, जल्पे तु तस्य भवत्यनुज्ञेति

र्भवत्येष वादजल्पयोर्विशेषः ।

यदूचुः—

"दुःशिक्षितकुतर्कांश-लेशवाचालिताननाः ।
शक्याः किमन्यथा जेतुं वितण्डाटोपमण्डिताः ? ॥ १ ॥
गतानुगतिको लोकः कुमार्गं तत्प्रतारितः ।
मा गादिति च्छलादीनि प्राह कारुणिको मुनिः"॥२॥ इति

नैतत् । असदुत्तरैः परप्रतिक्षेपस्य कर्त्तुमयुक्तत्वात्, न ह्य न्यायेन जयं यशो वा समीहन्ते महात्मानः । अथ स्यात् प्रतिवादी बलवान्, सम्भाव्यते च तज्जये धर्मध्वंसः, न प्रतिभासेत च तदानीं प्रतिभापटिमविगमेन सम्यगुत्तरम्, तर्हि असदुत्तरैरपि पांशुभिरिवावकिरन्नेकान्तपराजयाद्वरं तत्र सन्देह इति धिया न दोषमावक्ष्यतीति चेत्; तत्राप्यापवादिकजात्युत्तरप्रयोगसद्भावेऽपि कथान्तरभावः कथं स्यात् ? । न हि वाद एव द्रव्यक्षेत्रकालभावानुसारेणासदुत्तरप्रयोगेऽपि क्वचित् प्रसज्येत कथान्तरत्वमिति जल्प-वितण्डाप्रत्याख्यानेन वाद एवैकः कथापदवीसुभग इति ॥ ५० ॥

ननु वादे यदि वादिप्रतिवादिनौ द्वावपि जिगीषू, एको वा जिगीषुः, अन्यः परात्मनि तत्त्वनिर्णिनीषुश्च, तत्र शाठ्यकलहादिसम्भवे जयपराजयव्यवस्था कुतः स्यात् ?; तथाविधशासनपतिप्राश्निकाभावादित्यत्राह—

## सविजिगीषुको वादि-प्रतिवादि-सभ्य-सभापतिभिश्चतुरङ्गः ॥ ५१ ॥

वाद इत्यनुवर्त्तते, उत्तरत्र च, सह विजिगीषुणा वादिना प्रतिवादिना वा, उभाभ्यां ताभ्यां विजिगीषुभ्यां वेति सविजिगीषुको वादश्चतुरङ्गः, वाक्यस्यासति बाधके सावधारणत्वात्

चतुरङ्ग एवेत्यर्थः; वादि-प्रतिवादि-सभ्य-सभापतयश्चत्वार्यङ्गानि। तत्र मल्ल-प्रतिमल्लन्यायेन प्रारम्भक-प्रत्यारम्भकौ वादिप्रतिवादिनौ । सभायां पर्षदि साधवः सभ्याः प्राश्निकाः ।

यदुक्तम्—

स्वसमयपरसमयज्ञाः कुलजाः पक्षद्वयेप्सिताः क्षमिणः ।
वादपथेष्वभियुक्तास्तुलासमाः प्राश्निकाः प्रोक्ताः ॥ १ ॥

आहुश्च श्रीवादिदेवसूरिचरणाः "वादिप्रतिवादिसिद्धान्ततत्त्वनदीष्णत्व-धारणा-बाहुश्रुत्य-प्रतिभा-क्षान्ति-माध्यस्थ्यैरुभयाभिमताः सभ्याः" इति "वादिप्रतिवादिनोर्यथायोगं वादस्थानककथाविशेषाङ्गीकारणाऽग्रवादोत्तरवादनिर्देशः, साधकबाधकोक्तिगुणदोषावधारणम्, यथावसरं तत्त्वप्रकाशनेन कथाविरमणम्, यथासम्भवं सभायां कथाफलकथनं चैषां कर्माणि" इति "प्रज्ञाऽऽज्ञैश्वर्यक्षमामाध्यस्थ्यसम्पन्नः सभापतिः" इति ।

तथाविध एव हि सभापतिः वादिप्रतिवादिसभ्योक्तार्थावधारणायां क्षमते, व्यपोहति च वादिकलहम्, कारयति च 'यो येन जीयते स तस्य शिष्यः, इत्यादि वादिप्रतिज्ञातार्थम्, करोति च पारितोषिकवितरणादि ।

तदुक्तम्—

"विवेकवाचस्पतिरुच्छ्रिताज्ञः क्षमान्वितः संहृतपक्षपातः ।
सभापतिः प्रस्तुतवादिसभ्यैरभ्यर्थ्यते वादसमर्थनार्थम्" ॥१॥ इति

एतदपराङ्गयुगलं विजिगीषुवादिप्रतिवादिवादे ताभ्यां परस्परस्य जयपराजयव्यवस्थाविलोपिनः शाठ्यकलहादेर्निवारणार्थं लाभपूजाख्यात्यादिहेतवे वा, विजिगीषोः परत्र तत्त्वनिर्णिनीषोश्च वादे विजिगीषुणा लाभादिहेतवे, परत्र तत्त्वनिर्णिनीषुणा च शाठ्यकलहाद्यपोहायापेक्ष्यते एवेति सिद्धं यत्रैको विजिगीषुर्द्वौ वा, तत्र वादे सभ्यसभापत्योरवश्यम्भावः, न ह्य-

न्यथा वादिनौ स्वाभिमतसाधनदूषणसरणिमाराधयितुं क्षमौ, नापि दुःशिक्षितकुतर्कलेशवाचालबालिशलोकविप्लावितो गतानुगतिको जनः सन्मार्गं प्रतिपद्येतेति ॥ ५१ ॥

अथ तत्त्वनिर्णिनीषुमात्रवादस्याङ्गनियममुपदर्शयति–

**विपरीतो द्व्यङ्गः क्वचिच्च त्र्यङ्गः ॥ ५२ ॥**

उक्तलक्षणात् सविजिगीषुकवादाद् विपरीतो जिगीषुरहितस्तत्त्वनिर्णिनीषुभ्यां प्रवर्त्तितो वादो द्व्यङ्गः, तथाहि– वादी तावद् द्वेधा, विजिगीषुः, तत्त्वनिर्णिनीषुश्च, तत्र तत्त्वनिर्णिनीषुरपि द्विधा, स्वात्मनि तत्त्वनिर्णिनीषुः, परत्र तत्त्वनिर्णिनीषुश्च, परत्र तत्त्वनिर्णिनीषुरपि द्विविधः, क्षायोपशमिकज्ञानशाली केवलज्ञानी च, इत्येवं चतुर्धा वादी भवति, प्रतिवाद्यपि तथैव चतुष्प्रकारो द्रष्टव्यः। तत्र यद्यप्येकैकशो वादिनः प्रतिवादिना सार्धं षोडश भेदाः प्रादुर्भवन्ति, तथाहि— जिगीषुर्जिगीषुणा १ जिगीषुः स्वात्मनि तत्त्वनिर्णिनीषुणा २ जिगीषुः परात्मनि तत्त्वनिर्णिनीषुणा क्षायोपशमिकज्ञानशालिना ३ जिगीषुः परात्मनि तत्त्वनिर्णिनीषुणा केवलज्ञानिना ४ चेति। स्वात्मनि तत्त्वनिर्णिनीषुर्जिगीषुणा १ स्वात्मनि तत्त्वनिर्णिनीषुः स्वात्मनि तत्त्वनिर्णिनीषुणा २ स्वात्मनि तत्त्वनिर्णिनीषुः परत्र तत्त्वनिर्णिनीषुणा क्षायोपशमिकज्ञानिना ३ स्वात्मनि तत्त्वनिर्णिनीषुः परत्र तत्त्वनिर्णिनीषुणा केवलिना ४ चेति। परत्र तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानी जिगीषुणा १ परत्र तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानी स्वात्मनि तत्त्वनिर्णिनीषुणा २ परत्र तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानी परत्र तत्त्वनिर्णिनीषुणा क्षायोपशमिकज्ञानशालिना ३ परत्र तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानी परत्र तत्त्वनिर्णिनीषुणा केवलज्ञानिना ४ चेति। परत्र तत्त्वनिर्णिनीषुः केवलज्ञानी जिगीषुणा १ परत्र तत्त्वनिर्णिनीषुः केवलज्ञानी स्वात्मनि

तत्त्वनिर्णिनीषुणा २ परत्र तत्त्वनिर्णिनीषुः केवलज्ञानी परत्र-तत्त्वनिर्णिनीषुणा क्षायोपशमिकज्ञानशालिना ३ परत्र तत्त्वनिर्णिनीषुः केवलज्ञानी परत्र तत्त्वनिर्णिनीषुणा केवलिना ४ चेति, तथापि प्रथमचतुष्के द्वितीयः द्वितीयचतुष्के प्रथमो द्वितीयश्च चतुर्थचतुष्के चतुर्थश्च भेदः पातनीयः, न हि स्वात्मनि तत्त्वनिर्णिनीषुः जिगीषुं प्रति वादितां प्रतिवादितां वा प्रतिपत्तुमर्हति, स्वयं तत्त्वनिर्णयानभिमाने परावबोधार्थं प्रवृत्तेरयोगात् तस्मात्तत्त्वनिर्णयासम्भवाच्च एवमेव स्वात्मनि तत्त्वनिर्णिनीषुं प्रति स्वात्मनि तत्त्वनिर्णिनीषोरप्यवधेयम् ।

केवलिनस्तु केवलिना सहासम्भव एव वाद इति द्वादशैव भेदाः परिशिष्यन्ते । तत्र सविजिगीषुकवादे चतुरङ्गत्वावश्यम्भावः प्रागेव प्रादर्शि । यत्र पुनः स्वात्मनि तत्त्वनिर्णिनीषुः परत्र तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानी च, अथवा परत्र तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानी परत्र तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानी च वादि-प्रतिवादिभावेन चकासतः, असौ वादो त्र्यङ्गो वेदितव्यः, तत्र सभ्यसभापत्योरनपेक्षणात्, नह्यनयोः स्वपरोपकारायैव प्रवृत्तवतोः शाठ्यकलहादि- लाभादिकामभावाः सम्भवन्ति । यत्र च स्वात्मनि तत्त्वनिर्णिनीषुः परत्र तत्त्वनिर्णिनीषुः केवली च, अथवा परात्मनि तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानी परत्र तत्त्वनिर्णिनीषुः केवली च भासेते, असौ वादो त्र्यङ्ग एव, तत्त्वनिर्णायकत्वाभावासम्भवेन सभ्यानाम्, कलहलाभाद्यभिप्रायाभावेन सभापतेश्चानपेक्षणात् ।

"क्वचिच्च" इति, क्वचित् स्वात्मनि तत्त्वनिर्णिनीषु-परत्र तत्त्वनिर्णिनीषुक्षायोपशमिकज्ञानिनोः परत्र तत्त्वनिर्णिनीषुक्षायोपशमिकज्ञानिपरत्रतत्त्वनिर्णिनीषुक्षायोपशमिकज्ञानवतोर्वा वादिप्रतिवादिभावेन विभ्राजमानयोर्वादे चकारः कादाचित्कत्वद्योतकः कदापि त्र्यङ्गत्वमपि सम्भवति, तथाहि- यदा खलूत्ता-

ष्यतापि क्षायोपशमिकज्ञानशालिना प्रतिवादिना न कथञ्चित् तत्त्वनिर्णयः परत्र पार्यते कर्त्तुं तदा तन्निर्णयार्थमुभाभ्यामपि सभ्यानामपेक्षा क्रियत एव। सभापतेस्तूक्तदिशा नास्त्यपेक्षेति। ननु केवलिनि भगवत्यपि तत्त्वनिर्णयमुत्पादयितुं प्रवर्त्तते वादिभ्रुव इति महत्कुतूहलम्। ननु किमत्र कुतूहलम्?। निःसीमा हि मोहहतकस्य महिमा, इति कश्चिदात्मानं निर्णीततत्त्वमिवाभिमन्वानः समग्रपदार्थपरमार्थदर्शिनि केवलिन्यपि तन्निर्णयोपजननार्थं प्रवर्त्तते इति न कदाचिदसम्भावना। भगवांस्तु केवली परमकृपापीयूषपूरपूरितान्तःकरणतया तमप्यवबोधयतीति किन्नामात्रदुर्घटम्?। एवं विजिगीषयापि केवलिना सह वदितुमारम्भो नासम्भवो वेदितव्यः; श्रुतं च स्यात्, अपापानाम्न्यां पुरि समवसृते परमात्मनि श्रीमहावीरदेवे तं विवन्दिषून् समापततोऽहमहमिकया दिविषदः समवलोक्य तत्रैव यज्ञकर्मणि प्रवृत्तः समधीतसकलवेदतदङ्गादिशास्त्रस्तोम आत्मानं सर्वज्ञरूपेण प्रख्यातिं निन्यानो द्विजवरो गौतमाऽपरनामेन्द्रभूतिः समुद्घोषयन् क्रतुप्रभावं चाण्डालवेश्मेवामुं यज्ञवाटमपहायसमवसरणभुवमुपगच्छत्सु त्वमीषु जनमुखाच्च निशम्य सर्वज्ञागमनं प्रकुपितः

"सारङ्ग-मातङ्ग-तुरङ्गपूगाः! पलाय्यतामाशु वनादमुष्मात्।
साटोपकोपस्फुटकेशरश्रीर्मृगाधिराजोऽयमुपेयिवान् यत्" ॥१॥

इत्येवं सावष्टम्भमुच्चैर्जल्पयन् "सर्वज्ञ" इत्यक्षरसन्निपाताऽऽपतितप्रकृतिवैषम्यः शिष्यपञ्चशतीवृतो वादिभ्रुवो विजिगीषया भगवन्तमुपागतो भागवतेन सुधामधुरालापेन सद्यः शमपदवीविशदीबभूवेति ॥ ५२ ॥

इत्याचार्यश्रीविजयधर्मसूरीश्वरविहितायाः प्रमाणपरिभाषाया वृत्तिभूते मुनिश्रीन्यायविजयप्रणीते न्यायालङ्कारे स्मरणप्रत्यभिज्ञानतर्काऽनुमानतत्प्रयोगभूमिभूतवादोपवर्णनाभिरामस्तृतीयः परिच्छेदः ॥ ३ ॥

अर्हम् ।

# अथ चतुर्थः परिच्छेदः ।

उक्तमनुमानम् । साम्प्रतं परोक्षप्रमाणान्तिमभेदमागममुपदिशति—

## शाब्दज्ञानमागमः ॥ १ ॥

शब्देन जनितं शाब्दं तथाभूतं ज्ञानं यथार्थज्ञानम्, आगम्यन्ते मर्यादया परिज्ञायन्तेऽर्था अनेनेत्यागमः ।

आगमस्वरूपविरहित आगमवदाभासमान आगमाभासः, अनाप्तप्रणीतभणितिप्रभवत्वादयथार्थशाब्दज्ञानमागमाभासपदार्थ इत्यर्थः ।

आप्तवचनस्य चोपचरितप्रामाण्यतया तदितरवचनस्याप्यर्थविसंवादित्वादागमाभासत्वमविरुद्धम् ।

उदाहरणं यथा—

"एकान्तानित्यं नित्यं वा वस्तु केवलिनः पुनः ।
भोक्तारः कवलान् न स्युर्न सिध्येयुश्च योषितः ॥ १ ॥
नाऽर्चेन्न चालङ्करणादिनाऽल- ङ्कुर्वीत विम्वं परमेशितुश्च ।
सुखादिकं स्याच्च शरीरधर्मः सर्वं पुनः स्यात् क्षणभङ्गभङ्गि ॥२॥
जगन्मिथ्या ब्रह्माऽवितथमिति सर्वं प्रकृतितः
परीणामो विश्वं भवति पुनरेतद् भगवतः ।
जगच्चिन्मात्रात्मं स्फुरति खलु शून्यं पुनरिदं
भ्रमात्कुम्भस्तम्भाम्भइभकरभाम्भोनिधिधियाम् ॥३॥ इत्यादि ।

अपिच पश्यत पश्यत शिशवः ! एष पुरश्चण्डेतररुचिरुचि रुचिरो रजतराशिः ।

गच्छत गच्छत वहिर्ग्रामं वटवः ! कृषणकृपिवलक्षेत्र-

महीतले समुन्मीलितविमलकमले पृथुपद्माकरजले स्नानलीलाविलासं परिकलयतु मर्कटं नटकुलम्, इत्यादि।

उक्ताः प्रमाणसामान्यतद्विशेषाभासाः। इदानीं तद्विषयाभासः प्रकटनीयः, स तु "उत्पाद-व्यय-ध्रौव्ययुक्तं वस्तु प्रमाणस्य विषयः" इति सूत्रेणोत्पादादित्रयविशिष्टार्थस्य प्रमाणविषयत्वोपदर्शने नित्यमेव, अनित्यमेव, तद्द्वयं वाऽन्योन्यनिरपेक्षं वस्तु प्रमाणस्य विषय इत्येकान्तः प्रमाणस्य विषयाभासोऽतिरोहित एव। एतच्च तत्त्वं तत्रैव व्यविचाम।

भिन्नमेव, अभिन्नमेव वा प्रमाणतः फलं फलाभासमपि प्रमाणस्य "तयोर्भेदाभेदः" इत्यत्र प्रोक्तप्रायमेवेति॥ १॥

ननु यद्यर्थज्ञानमागमस्तर्हि कथमाप्तशब्दात्मकोऽसौ सिद्धान्तिनां प्रसिद्धः?, "आप्तोपदेशः शब्दः" इति चोदानाः कथमन्ये शोभेरन्?। अत्राह—

## उपचारात्तत्साधकः शब्दोऽपि॥ २॥

तस्य शाब्दयथार्थज्ञानस्य साधको निर्वर्त्तकः शब्दोऽपि, अपिशब्दः समुच्चयार्थः, प्रतिपाद्यज्ञानस्य हि तथाभूतः शब्दः कारणमिति कारणे कार्योपचारादसावागम इत्यपदिश्यते; यथा समस्त्यत्र प्रदेशे रत्ननिधानं सन्ति रत्नसानुप्रभृतय इति।

न च व्याप्तिग्रहणबलेनार्थप्रतिपादकत्वाद् धूमवदस्यानुमानेऽन्तर्भावः, कूटाकूटकार्षापणनिरूपणप्रवणप्रत्यक्षवदभ्यासदशायां व्याप्तिग्रहनैरपेक्ष्येणैवास्याऽर्थबोधकत्वात्, इत्यन्यत्र विस्तरः।

यत्तु शब्दः परोक्षार्थं सम्बद्धं वा गमयेत् असम्बद्धं वा, तत्रोदीचीनस्तावदुपक्षिप्तः पक्षो न सूक्ष्मः, गवादिशब्दादश्वादिप्रत्ययोदयप्रसङ्गात्। पौरस्त्ये तु सम्बद्धशब्देन लिङ्गभूयमभिरोहताऽभ्युत्थास्नुप्रत्ययोऽनुमानमेवेत्यभिसन्धिः, नासावभि-

रामः, प्रत्यक्षस्याप्येवमनुमानत्वानुषक्तेः तस्यापि स्वविषये सम्बद्धस्यैव सतस्तद्गमकत्वात्, इतरथा सर्वप्रमातॄणां सर्वार्थप्रत्यक्षत्वप्रसङ्गात् । विषयसम्बद्धत्वसामान्येऽपि प्रत्यक्षानुमानयोः सामग्रीभेदात् प्रमाणान्तरत्वस्वीकारे आगमस्यापि तथाभूतत्वेन प्रमाणान्तरत्वं कथं न स्यात्? । अन्यथार्धजरतीयन्यायानुप्रवेशः । तदूचुः—

"शब्दादुदेति यज्ज्ञानमप्रत्यक्षेऽपि वस्तुनि ।
शाब्दं तदिति मन्यन्ते प्रमाणान्तरवादिनः" ॥१॥ इति ।

कः पुनः नार्मस्ताऽनभ्यासावस्थायां शब्दस्यानुमानमानताम्, कस्यचित् प्रस्मृतसमयस्य समयान्तरे रसालशब्दाकर्णने यो रसालशब्दः स तथाभूतविटपिविशेषवाची यथा चैत्रोद्भावितः पुराणः तथा चायमपि मैत्रोत्थः, इत्येवं शब्दे व्याप्तिज्ञानबलेन तदर्थप्रत्ययोदयदर्शनात्; इति सिद्धमागमः पृथक् प्रमाणमिति । एतादृशप्रमाणीभूतशब्दं तदर्थज्ञानपूर्वकं प्रयोक्ता चाप्तो वेदितव्यः । स च द्वेधा प्रादर्शि, लौकिको लोकोत्तरश्च, तत्राद्यो जनकजनन्यादिः, अन्तिमस्तीर्थकरगणधरादिरिति ॥ २ ॥

ननु "शाब्दयथार्थज्ञानसाधकः शब्द" इत्युक्तं तत्र सङ्केतमात्रेण शब्दस्तत्साधकः स्वाभाविकसामर्थ्यमपि धरमाणो वा?; अत्राह—

## अर्थप्रकाशने योग्यः सङ्केतापेक्षी ॥ ३ ॥

शब्द इति वर्त्तते, उत्तरत्र च । अर्थप्रकाशने अर्थावबोधाविर्भावे योग्यो योग्यतां बिभ्राणः शब्दः । योग्यता पुनः सहजसामर्थ्यम् । ननु यदि तादृशशक्तिविशेषं दधिवान् ध्वनिरर्थप्रकाशं प्रादुष्कुर्यात्, सर्वशब्दैः सर्वलोकः सर्वार्थान् प्रतीयात् इत्यत आह—" सङ्केतापेक्षी " इति; सङ्केतः समयः, यः शब्दो य-

त्रार्थे सङ्केतिनस्तमसावीष्टेऽवबोधयितुम् । एवं च सहजसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्द इति निर्व्यूढम् ।

नन्वेषा सहजयोग्यता नित्या स्यात् अनित्या वा ? । न तावदनित्या, अनवस्थादौस्थ्यापातात्; तथाहि प्रसिद्धसम्बन्धेनायमित्यादिना शब्देनाप्रसिद्धसम्बन्धस्य घटादेः शब्दस्य सम्बन्धः क्रियते, तस्याप्यन्येन प्रसिद्धसम्बन्धेन सम्बन्धः, तस्यापि चान्येनेति । नित्यत्वे पुनरस्याः सिद्धं नित्यसम्बन्धाच्छब्दानां वस्तुप्रतिपत्तिहेतुत्वमिति मीमांसकाः । ते लक्ष्मीनामार्थदरिद्रस्त्रीवदमीमांसकाः मीमांसकाः । हस्तादिसंज्ञासम्बन्धवच्छब्दार्थसम्बन्धस्यानित्यत्वेपि पदार्थप्रतिपत्तिहेतुत्वाविरोधात् । नखलु हस्तसंज्ञादीनां स्वार्थेन सम्बन्धो नित्यस्तेषां नित्यत्वाभावे तदाश्रितसम्बन्धस्य नित्यत्वविरोधात् । न खलु भित्तिव्यपाये तदाश्रितं चित्रं न व्यपैतीत्याह कश्चन स्वस्थः पुमान् । न चानित्यत्वेऽप्यस्य नास्त्यर्थप्रतिपत्तिहेतुत्वम् । प्रत्यक्षविरोधात् । एवं शब्दार्थसम्बन्धेऽपि । स हि तावदाश्रितोऽनाश्रितो वाऽर्थावगमप्रगुणः ? । न तावदनाश्रितः । नभोवदनाश्रितस्य सम्बन्धत्वायोगात् । आश्रितत्वे वक्तव्यं स्यात् तदाश्रयस्य नित्यत्वानित्यत्वान्यतरत् । नित्यत्वे वक्तव्यं पुनस्तथाभूता जातिर्व्यक्तिर्वा ? । न तावज्जातिः तस्याः शब्दार्थत्वे प्रवृत्तिनिवृत्त्यनुपपत्तेः । व्यक्तेस्तु तदाश्रयत्वे कथं नित्यत्वम्, अनभ्युपगमात् तथा प्रतीत्यभावाच्च । अनित्यत्वे च तदाश्रयस्य सिद्धं तद्व्यपगमे सम्बन्धस्यानित्यत्वम्, भित्तिव्यपगमे चित्रवदिति । एतेन

"नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः" ॥ १ ॥

इति प्रत्यक्षेपि तत्प्रलापः । सदृशपरिणामविशिष्टस्यार्थस्य शब्दस्य तदाश्रितसम्बन्धस्य चैकान्ततो नित्यत्वासम्भवात् । सर्वथा नित्य-

वस्तुनः क्रमयौगपद्याभ्यामर्थक्रियानुपपादुकत्वस्य प्रागेव प्रदर्शितत्वात्, अर्थक्रियाशून्यस्य च तुरङ्गमोत्तमाङ्गसङ्गासङ्गिशृङ्गवदसत्त्वव्यवस्थानात्। यच्चानवस्थादूषणेनोपालेभानोऽभूः, तदप्यक्षेमङ्करम्, अयमित्यादेः शब्दस्यानादिपरम्परातोऽर्थमात्रे प्रसिद्धसम्बन्धत्वात् तेनात्रगतसम्बन्धस्य घटादिशब्दस्य सङ्केतविधानात्। अपिचैष दोषानलस्तव चरणे नास्ति ज्वलनः?। तवापि हि विना अनभिव्यक्तसम्बन्धस्य शब्दस्याऽभिव्यक्तसम्बन्धेन शब्देन सम्बन्धाभिव्यक्तिं कुतः क्षणमपि सुखशायिका?। एवं च तस्याप्यन्येनाभिव्यक्तसम्बन्धेनेति स्पष्टमेव प्रविष्टोऽनवस्थाव्याघ्रीमुखे त्वदभ्युपगमपादः।

यदि पुनः कस्यचित् स्वत एव सम्बन्धाभिव्यक्तिरित्यभिप्रैषि तदा परस्यापि सा तथैवास्तीति देहि सङ्केतक्रियायै जलाञ्जलिम्, वैयर्थ्यात्।

शब्दविभागाभ्युपगमे चाऽलं सम्बन्धनित्यत्वपरिकल्पनेन, कल्पने चाऽगृहीतसङ्केतस्याप्यतोऽर्थप्रतिपत्तिर्नोदियादिति का प्रत्याशा?। सङ्केतस्तस्य व्यञ्जक इत्यप्ययुक्तमभिधानम्, नित्यस्य व्यङ्ग्यत्वायोगात् नित्यं हि वस्तु यदि व्यक्तं व्यक्तमेव, अथाव्यक्तम् एवमप्यव्यक्तमेव, अभिन्नस्वभावत्वात्तस्येति नैकान्ततो नित्यत्वेनोपपादुकः कश्चिदर्थः, इति नासिद्धमुक्तयुक्त्या शब्दार्थसंबन्धस्यानित्यत्वमिति।

अथ स्वबुद्धिं बोधयन्ति बौद्धाः।

ननु नोपपद्यते शब्दानामर्थप्रतिपादकत्वम्, य एव हि शब्दाः सत्यर्थे दृष्टास्त एवातीतानागतकाले तदभावेऽपि दृश्यन्ते। यदभावे च यद् दृश्यते न तत्तत्प्रतिबद्धम्, यथा पटाभावेपि दृश्यमानो घटः, अर्थाभावेपि चोपलभ्यन्ते शब्दास्तन्नैतेऽर्थप्रतिपादकाः किन्त्वन्यापोहमात्राभिधायिन इति। तदेतदपरीक्षितमनोरमम्। अर्थवतः शब्दात्तद्रहितस्यास्यान्यभावात्। न चा-

न्यस्य व्यभिचारेऽन्यस्याप्यसौ जाघटीति, इतरथा हि गोपालघटिकादिधूमस्य कृशानुव्यभिचारोपलम्भात् पर्वतादिप्रदेशवर्त्तिनोपि स स्यात् ।

तथा च दत्तः कार्यहेतवे जलाञ्जलिः । सकलशून्यता च स्वप्नादिप्रत्ययानां क्वचिद् विभ्रमोपलम्भात् सर्वप्रत्ययानां तदापत्तेः । यत्नतः परीक्षागोचरमानिन्यानं कार्यं कारणं नातिलङ्घत इति चेत् ? अन्यत्रापि तुल्यम् । शब्दो हि यत्नतोऽर्थवत्त्वेतरस्वभावतया परीक्षितोऽर्थं न व्यभिचरतीति । तथाच कोशपानप्रत्यायनीय एवान्यापोहमात्राभिधायकभावः शब्दानाम् ।

अपिचाऽन्यापोहमात्राभिधायित्वे प्रतीतिविरोधः, गवादिशब्देन विधिरूपतयार्थबोधस्य सर्वानुभवसिद्धेः । अन्यनिषेधमात्राभिधायित्वे च तत्रैव चारितार्थ्येन सास्नादिमतोऽर्थस्य ततोऽप्रतीतेस्तद्गोचरगवादिबुद्ध्युत्पादकं ध्वन्यन्तरमवश्यमृगणीयं स्यात् । किं चान्यापोहोऽपि वाच्योऽवाच्यो वेति वक्तव्यम् ? वाच्यत्वे विधिरूपेण वा इतरव्यावृत्त्या वा ? प्रथमे कथमपोहः सर्वशब्दार्थः ? । द्वितीये कुतोऽपोहोऽपि शब्दाधिगम्यो मुख्यः ? । तद्व्यावृत्तेरपि व्यावृत्यन्तरेणाभिधानाद् अनवस्थापातश्च । अवाच्यत्वे अन्यापोहं प्रतिपादयति शब्द इत्यस्य व्याघातः, इति सिद्धं प्रतिनियताच्छब्दात्प्रातिनियतेऽर्थे जगतः प्रवृत्त्युपलब्धेः शब्दप्रत्ययानां वस्तुभूतार्थविषयत्वम् ।

प्रयोगश्च—

ये परस्पराऽसङ्कीर्णप्रवृत्तयस्ते वस्तुभूतार्थविषया यथा श्रोत्रादिप्रतीतयः । परस्परासङ्कीर्णप्रवृत्तयश्च दण्डीत्यादिशाब्दप्रतीतयः । न चायमसिद्धो हेतुः, दण्डी विषाणीत्यादिधीध्वनी हि लोके द्रव्योपाधिकौ प्रसिद्धौ । नीलो धवलः, गच्छति यच्छतीत्यादिकौ तु गुणक्रियानिमित्तौ । गौरश्व इत्यादी सामान्यविशेषोपाधी । इहात्मनि ज्ञानमित्यादी सम्बन्धोपाधिकानेवेतिप्र-

तीतेः । एतेन कृतसमया ध्वनयोऽर्थाभिधायिनो विपरीता वेत्याद्यचोद्यम् । कृतसमयानामेव ध्वनीनामर्थाभिधायकत्वेनाभ्युपगमात् । समयः पुनः सामान्यविशेषात्मकेऽर्थेऽवसातव्यः न जात्यादिमात्रे । न चात्रानन्त्याद् व्यक्तीनामन्योन्याननुगमाच्च कुतः सम्भवी सङ्केत इत्यभिधातव्यम् ; समानपरिणामापेक्षया क्षयोपशमविशेषप्रादुर्भूततर्कप्रमाणेन प्रतिभासमानत्वेनामूषां सङ्केतविषयतोपपत्तेः । इतरथाऽनुमानप्रवृत्तिरपि कुतः स्यात् ? इति चिन्त्यताम्, तत्राप्यानन्त्याननुगमतया साध्यसाधनव्यक्तीनां दुःसम्भव एव हि सम्बन्धग्रह इति कृतं बहुना ।

यत्तु अर्थवाचकः स्फोट इति मतं शाब्दिकानाम्, तदप्यसमीक्षितसुन्दरम् । प्रमाणाभावाद्; दृष्टकारणकलापेनार्थावबोधसिद्धौ अदृष्टतथाविधकल्पनानौचित्याच्च । न च वर्णानां व्यस्तभावेन वाचकत्वाङ्गीकारे एकेनैव वर्णेन गवाद्यर्थप्रत्ययोदये तदुत्तरवर्णानामनुच्चारणप्रसङ्गः, वैयर्थ्यात् । सामस्त्यं तु तेषामसम्भवम्, क्रमोत्पन्नानाममीषामन्तरविलीनत्वेन समुदायासम्भवात् । युगपदुत्पादस्तु तेषामेकपुरुषापेक्षया नृविषाणायमाणः । ते हि प्रतिनियतस्थानकरणप्रयत्नप्रभवाः, इति चतुरा ताच्चिन्ता । स्वाभिमतमतेऽप्येतद्दोषाविशेषात् । शक्यते हि वक्तुं न समस्ता वर्णा अभिव्यञ्जितुमर्हन्ति स्फोटम्, उक्तविधया तेषां सामस्त्यानुपपत्तेः । एवं वर्णान्तरोच्चारणानर्थक्यानुषङ्गात् प्रत्येकमपि नेति ।

वस्तुतस्तु सर्वप्रतीतिसिद्धपूर्ववर्णविनाशविशिष्टचरमवर्णादर्थप्रतीतेरभ्युपगमान्नोक्तदोषावतारः । वृन्तफलसंयोगाभावस्याप्रतिबद्धगुरुत्वफलप्रपातक्रियोत्पादे च कारणत्वदर्शनाद् नासिद्धमभावस्य सहकारिकारणत्वम् । कथमन्यथा प्राक्तनसंयोगाभावविशिष्टं कर्मोत्तरसंयोगं कुर्वीत ? । को वा न प्रत्येति परमाणौ परमाणुकुशानुसंयोगं तत्रत्यपूर्वरूपध्वंस-

विशिष्टीभूय रक्तिमानमानयन्तम् ? ।

यद्वा पूर्ववर्णविज्ञानाभावविशिष्टस्तज्ज्ञानजनितसंस्कारसव्यपेक्षो वाऽन्त्यो वर्णोऽर्थप्रतीतिप्रभावकः पूर्ववर्णविज्ञानोद्भूतसंस्कारश्च प्रणालिकया चरमवर्णसाहायकं प्राप्नोति । तद्यथा–प्रथमवर्णे तावद् विज्ञानम्, तेन च संस्कारोद्भूतिः, ततो द्वितीयवर्णविज्ञानम् । तेन च पूर्वज्ञानाऽऽहितसंस्कारसहितेन विशिष्टः संस्कारः प्रभाव्यते, एवं तृतीयादावप्यनुसन्धिः यावदन्तिमः संस्कारोऽर्थप्रतिपत्तिजनकचरमवर्णसहायो भवति ।

अथवा शब्दार्थोपलम्भहेतुक्षयोपशमप्रतिनियमादविध्वस्ता एव पूर्ववर्णप्रतिपदस्तत्संस्काराश्च चरमवर्णसंस्कारमर्जयन्ति । तथाभूतवासनोद्भूतस्मरणसव्यपेक्षो वा चरमो वर्णः पदार्थावसायहेतुरित्याहुः । एतेनैव च न्यायेन वाक्यार्थप्रतिपत्तिरप्यवधानीया ।

इत्थं च न किञ्चिद्विशेषं पश्यामो यदर्थमावश्यकाभ्युपगमः स्फोटः स्यात्, इति स्फोटनीय एव स्फोटः, न पुनः स्फोटनीय इति ॥ ३ ॥

अथ शब्दस्य पुद्गलतः समुत्पादं वदमानो यौग-मीमांसकमतं तिरस्करोति—

## पुद्गलजः ॥ ४ ॥

शब्दः पुद्गलजः पुद्गलैर्भाषावर्गणापरमाणुभिरारम्भणीय इत्यर्थः । अत्र "पुद्गलज" इत्यत्र जपदेन शब्दस्योत्पत्तिप्रकटनाद् नित्यत्वमभिमेनानो मीमांसकः पराकारि । पुद्गलपदेन पुनस्तस्य पौद्गलिकत्वभणनाद् गुणत्वमवगिरमाणो यौगः पराभावि । तत्र शब्दस्य नित्यत्वं प्रागेवापास्थामहीति नेह विस्तरेण पुनस्तद्विवरणं ग्रन्थगौरवभयादुचितं जानीमः, इति शब्दस्य पौद्गलिकत्वमेव परिचिन्तयामः ।

अयं तावदिह परकीयोऽभिसन्धिः—

सर्वे खलूत्पत्तिविनाशादिधर्माध्यासिताः क्वचिदाश्रितत्वेनैव स्वस्था यथा घटादयः, शब्दोपि तथैव सर्वविदुषां बालगोपालाङ्गनादीनां च प्रसिद्धः, अतस्तेनाप्यवश्यभवनीयं क्वचिदाश्रितत्वेन । अपिच गुणत्वात्तस्याधारः सिद्धिसौधमध्यारोहन्न शक्रेणापि शक्योऽधरीकर्त्तुम्, दृष्टा हि रूपादिगुणा घटादिद्रव्याधाराः, न च गुणत्वाधरीकारः क्षेमकारः, "शब्दो गुणः निषिध्यमानद्रव्यकर्मत्वे सति सत्तासम्बन्धित्वाद् रूपवत्" इत्याद्यनुमानेन तद्गुणत्वस्य प्रमाणपथारोहात् प्रामाणिकस्याप्यकक्षीकारे जगच्छून्यमापद्येत शून्यत्वस्यापि प्रमाणसाम्मुख्येप्यनङ्गीकारस्यैवौचित्या सर्वमसामञ्जस्यं दधाणं दुरुद्धरं किं न स्यात् ? । न च साधनमेव तदधरणीयम्, एकद्रव्यत्वेन शब्दस्य द्रव्यत्वप्रतिषेधात् " अद्रव्यमनेकद्रव्यं वा द्रव्यम् " इति वचनाद् । अद्रव्यं हि गगनादि द्रव्यमेव । अनेकद्रव्यं द्व्यणुकादिकमपि द्रव्यमेव । एकद्रव्यं तु द्रव्यं भवत्येव न, एकद्रव्यश्च शब्द इति नासौ स्वीकरणीयद्रव्यभावः । न चासिद्धं तस्यैकद्रव्यत्वम्, सामान्यविशेषवद्भावे सति बाह्यैकेन्द्रियप्रत्यक्षत्वेन हेतुना तदुपपत्तेः । एवं कर्मत्वमपि नादसीयं विचारसहम्, संयोगविभागाकारणत्वेन शब्दस्य कर्मत्वायोगात्, इति सिद्धं द्रव्यकर्मत्वप्रत्याख्यानेन पारिशेष्यात् शब्दो गुण इति । सिद्धश्च तत एव तदीयः कश्चनाश्रयः, शेषवदनुमानेन चाकाशमेव तदाश्रयः सिध्यति, तथाहि— न तावदयं शब्दः स्पर्शवतां परमाणूनां विशेषगुणः अस्मदादिप्रत्यक्षत्वात् कार्यद्रव्यरूपादिवत् । नापि कार्यद्रव्याणां पृथिव्यादीनां विशेषगुणः कार्यद्रव्यान्तराप्रादुर्भावेप्युपजातेः, अकारणगुणपूर्वकत्वात्, अयावद्द्रव्यभावित्वात्, अस्मदादिपुरुषान्तरप्रत्यक्षत्वे सति पुरुषान्तराप्रत्यक्षत्वाच्च सुखेच्छादिवत् । नाप्यात्मविशेषगुणः

बाह्येन्द्रियप्रत्यक्षत्वात्, आत्मान्तरग्राह्यत्वात् अहङ्कारेण ग्रहणाभावाच्च । नापि मनोगुणः अस्मदाद्यध्यक्षत्वात् रूपादिवत् । नापि दिक्कालगुणः विशेषगुणत्वात्, इति सिद्धं पारिशेष्यात् शब्द आकाशगुण इति । सोऽयं शब्द आकाशलिङ्गीभवन्नाकाशं गमयति तच्च शब्दलिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैकम् । सर्वत्रोपलभ्यमानगुणत्वाच्च विभु । सामान्यविशेषवत्त्वे सति अनाश्रितत्वाच्च नित्यम् । गुणवद्भावविशिष्टास्पर्शवत्त्वाच्चानाश्रितम् । इत्येकनित्यविभुगगनगुणः शब्द इति ।

अत्र ब्रूमः—

सामान्येनाश्रितत्वं शब्दानां त्वस्मदभिमतमेव, अङ्गीकुर्वते हि शब्दानां पुद्गलकार्यतया तदाश्रितत्वमर्हद्वाचमुपासीनाः ।

नित्यैकामूर्त्तविभुद्रव्याश्रितत्वे तु साध्यमानं सन्दिग्धविपक्षव्यावृत्तिकत्वेनानैकान्तिकात्तद्धेतोर्न सिध्यति, तथाभूतसाध्यान्वितत्वेनामुष्य हेतोः क्वापि दृष्टान्तेऽप्रसिद्धेः ।

प्रतिषिध्यमानकर्मत्वे सत्यपि च प्रतिषिध्यमानद्रव्यभावत्वं शब्दे असिद्धिबन्धकीसम्बन्धधारकमेव, शब्दो हि द्रव्यम्, स्पर्शाल्पमहत्त्वपरिमाणसङ्ख्यासंयोगगुणाश्रयत्वात् । गुणाश्रयाः खलु द्रव्याणि भवन्त्येव । न चास्यासिद्धं तावत्स्पर्शाश्रयत्वम्, स्वाभिसंसृष्टार्थान्तराभिघातहेतुत्वाद् मुद्गरादिवत् । सुप्रतीतो हि कंसपात्र्यादिध्वानाभिसम्बन्धेन श्रोत्राद्यभिघातः तत्कार्यस्य बाधिर्यादेरुपलम्भात् । न चैषोऽस्य निःस्पर्शत्वे समर्हति, भवितुम्, न खल्वस्पर्शेण कालादिनाभिसंसर्गेऽसावुपलब्धिपथमवतीर्णः । न च शब्दसाहचर्यं भेजुषा नित्यगतिना तदभिघात इति रमणीयं वचः, शब्दाभिसम्बन्धान्वयव्यतिरेकानुविधायित्वात्तस्य । तथाभूतेपि तदभिघातेऽन्यस्यैव हेतुभावकल्पने तत्रापि कः समाश्वासः ?,

शक्यते हि वक्तुं न वाताद्यभिसम्बन्धात्तदभिघातः अपित्वन्येन इत्यनवस्थानं हेतूनाम् ।

यदि च गुणत्वेनास्य निर्गुणत्वात् स्पर्शानुपपत्तेस्तदभिघातहेतुत्वं न विचारसहमिति वक्षि ? तदा गृहाण शिरसि चक्रकम्, सति ह्यद्रव्यत्वे गुणत्वम्, सति चास्पर्शवत्त्वेऽद्रव्यत्वम्, सति पुनर्गुणत्वे निःस्पर्शत्वमिति । अपि च स्पर्शवता द्रव्येणाभिहन्यमानत्वमस्य स्पर्शवत्त्वसाधनमत्यलं प्रतीयत एव, को हि न प्रत्येति प्रतिपवनभित्त्यादिनाभिहन्यमानभावं शब्दस्य सकलजनसाक्षिकम् ? । न च सम्भवति मूर्त्तेनामूर्त्तस्याविरोधभावात् प्रतिघातो गगनभित्त्यादिवत् तन्नास्यासिद्धः स्पर्शवद्भावः ।

अल्पत्वमहत्त्वपरिमाणाश्रयत्वमप्यल्पमहत्त्वप्रत्ययस्य तत्र सर्वानुभवसिद्धत्वादशक्यमपह्नोतुम् ।

सङ्ख्यावत्त्वमपि तत्र एकः शब्दः द्वौ शब्दौ वहवः शब्दाः इति विज्ञानात् अशक्यापलापम् ।

अथोपचाराच्छब्दे सङ्ख्यावत्त्वानुभवः इति मनः, तदपि भ्रान्तम्, प्रष्टव्यो ह्यत्राभिदधीत धीमान् किं कारणगतां सङ्ख्यां शब्द उपचारयसि ? विषयगतां वा । आद्येपि भणितव्यं किं समवायिकारणगतां कारणमात्रगतां वा ? । तत्र प्राचीनो युक्तितः पराचीन एव, "एकः शब्दः" इति सर्वदाव्यपदेशानुषङ्गात्, तस्य समवायिकारणस्य नभस एकत्वात् । अन्त्योऽपि तथैव, सर्वदा वहवः शब्दाः इति व्यपदेशानुषक्तेः तस्य वहुत्वात् । विषयसङ्ख्योपचारस्तु गगनाम्बराकाशामरपथादिशब्दानां वहुव्यपदेशभाक्त्वानुपपत्तेः; एको गोशब्द इत्यसिद्धेश्च न्यक्करणीय एव, एको हि गगनलक्षणो विषयः वहवः पुनः पश्वादिशब्दाः । संयोगवत्त्वं च तत्र वाय्वादिनाऽभिहन्यमानत्वात् पांश्वादिवदुपपादुकमेव, संयुक्ता एव हि पांश्वादयः पवनेन

अन्येन वाऽभिहन्यमाना दृष्टाः, एवं शब्दस्यापि तदभिघातश्चैत्रं प्रत्यागच्छतः प्रतिपवनेन प्रतिनिवर्तनात् पांश्वादिवदद्दुर्बोधः । कथमन्यथा स एव शब्दः दिगन्तरावस्थितस्य श्रुतिवर्त्तनीमवतरेत् ? ।

ननु गन्धादयः कश्चित्पुमांसं प्रत्यायन्तोऽमुना निवर्त्यमाना दृश्यन्ते, नचामीषाममुना युक्तः संयोगः, गुणत्वात्; एवं शब्देपि कुतः संयोगसिद्धिः इति चेत् ? । तद्वतो द्रव्यस्यैव तेन प्रतिनिवर्त्तनात् केवलानां त्वमीषां निष्क्रियत्वेनागमनानिवर्त्तनासम्भवात् इति सिद्धं गुणवत्त्वाद् द्रव्यं शब्द इति ।

अपिच क्रियावत्त्वेन तत्र द्रव्यत्वसिद्धिः । न चाऽसिद्धं क्रियावत्त्वम्, आगतोऽयं शब्दः, इति प्रत्यक्षादेव तत्सिद्धेः । अक्रियत्वे च शब्दस्य श्रोत्रेण शब्दग्रहो न स्यात्, श्रोत्रं हि नार्हति शब्दप्रदेशे व्रजितुम्; अप्राप्यकारित्वस्वीकारे दीयताम् "प्राप्यकारि चक्षुर्बाह्येन्द्रियत्वात् त्वग्वत्" इत्यनुमाने कुठारः । यदि पुनः श्रोत्रेन्द्रियं बहिःप्रदेशे गच्छेत् तदाऽन्तरालवर्त्तिनामपि शब्दानां ग्रहणं प्रसज्येत । अनुवात-प्रतिवात-तिर्यग्वातेषु प्रतिपत्त्यप्रतिपत्तीषत्प्रतिपत्तिभेदश्च नोपपद्येत, तस्य तत्कृतोपकाराद्ययोगात् ।

अपिच श्रोत्रमपि नाकाशमर्हति भवितुं बाधिर्याद्यभावप्रसङ्गात्, किन्तु मूर्त्तमेवेति न तस्यासौ गुणः ।

किञ्च शब्दस्याकाशगुणत्वस्वीकारे सर्वः सर्वशब्दान् प्रतीयात्, श्रोत्रसमवायाविशेषात् ।

यत्तु शब्दस्य पौद्गलिकत्वनिषेधाय स्पर्शशून्याश्रयत्वम्, अतिनिविडप्रदेशे प्रवेशनिर्गमयोरप्रतिघातः, पूर्वं पश्चाच्चावयवानुपलम्भः, सूक्ष्ममूर्त्तद्रव्यान्तराप्रेरकत्वम्, गगनगुणत्वम्, इत्येवं पञ्च हेतूनभ्यधुः, तत्रादिमस्तावद् भाषावर्गणादेस्तदाश्रयस्य स्पर्शवद्भावेनासिद्ध एव । द्वितीयोऽपि भित्त्यादिकमुप-

भिव्य प्रसर्पिणा मृगमदादिगन्धद्रव्येण व्यभिचार्य्येव । तृतीय-तुरीयौ पुनरुल्कादिना धूमादिना च तथैव । पञ्चमस्तु यथाऽसिद्धस्तथा प्रादीदर्शाम । अस्मदादिप्रत्यक्षत्वेन रूपादिवत् शब्दस्य गगनगुणत्वानुपपत्तेस्तद्वदेवेन्द्रियार्थत्वेन पौद्गलिकत्व-सिद्धेश्चेति सिद्धं शब्दः पौद्गलिक इति न गगनगुणः, गगनगु-णत्वे हि गगनस्यातीन्द्रियत्वेन शब्दस्य तद्गुणभूयं भेजान-त्वेन कुतः प्रत्यक्षप्रत्ययः प्रादुःष्यात् ?; न खल्वतीन्द्रियगुण ऐन्द्रियको दृष्ट इष्टो वा । न च दृष्टेष्टबाधितार्थमभ्युपयन्ति कृताधि-यः । तथा च प्रयोगः । येऽत्यन्तपरोक्षगुणिगुणाः नामी अस्मदाद्यध्यक्षाः, यथा परमाणुरूपादयः, अत्यन्तपरोक्षगुणि-गुणश्च पराभिप्रायेण शब्दः, इत्यमुनाप्येवमेव भूयेत । न च वा-युस्पर्शेन व्यभिचारोद्भावनं भव्यम्, तस्य प्रत्यक्षत्वाद्, इतरथा स्पर्शोऽत्र शीतः खरो वेति हि प्रत्यय उदियात्, न पुनर्वा-युरिति ।

कथञ्चिदेकत्वे च गुणगुणिनोर्गुणप्रतिभासे न्याय्य एव गुणि-प्रतिभासः । स्पर्शविशेषपरिणामरूपस्यैव च वायुत्वात् कथं नास्य प्रत्यक्षत्वम् ? । कथं च निबिडतरघटितकपाटसंपुटे गवलकुव-लयकलकण्ठीकण्ठकाण्डकृष्णान्धकारैकार्णवीभूते कारागेहे क्षिप्त-स्य पुंसः तत्रत्यघटादिवस्तुनः स्पर्शनेन प्रत्यक्षत्ववाचोयुक्तिर्युक्ता स्यात् ?; तत्र हि स्पृष्टेनापि घटादिनानध्यक्षेणैव भवदभिप्रायेण भूयेत, न चामुमेवंविधं तदानीं व्यवहरति कश्चिद्विपश्चित्, सर्वेषां तत्प्रत्यक्षत्वे तदानीं निर्विवादाभिप्रायात् । प्रयोगान्तरं च, य-दस्मदादिप्रत्यक्षं तन्नात्यन्तपरोक्षगुणिगुणः, यथा घटीयरूपादिः, तथाच शब्द इति । यच्चोक्तं सत्तासम्बन्धित्वादिति, तत्रापि वक्त-व्यं किं स्वरूपभूतया सत्तया सम्बन्धित्वमभ्युपजग्मानमास्ते ? आहोस्विद् अर्थान्तरभूतया ?; प्रथमे सामान्यादिर्व्यभिचारापातः, तेषां तथाभूतत्वेपि गुणत्वाभावाद्; द्वितीयस्त्वसङ्गत एव, न हि

शब्दादयः स्वयमसन्त एवार्थान्तरभूतया सत्तया संसृज्यमानाः सन्ति नाम तुरङ्गशृङ्गादेरपि तथाभूतत्वानुषक्तेः। एकद्रव्यत्वं च शब्दस्य गुणत्वे नभस्येवैकद्रव्ये समवेतत्वे च सिद्धे सिद्धिपथमारोहति, तत्तूक्तप्रकारेण विचारासहत्वात् प्रत्यक्षेपि नातस्तदसिध्यत्। एकद्रव्यत्वप्रसाधकं चानुमानमूचानमनेकद्रव्यः शब्दः अस्मदाद्यध्यक्षत्वे सति स्पर्शवत्त्वाद् घटवत्, इत्यनुमानेन ववाधानमेव।

यत्तु कार्यद्रव्यान्तरानाविर्भावेप्युत्पत्तिमत्त्वाद् इति हेतुना प्रतिचिक्षिपाणं कार्यद्रव्यपृथिव्यादीनां विशेषगुणत्वं तदपि वार्त्तमेव, शब्दस्य हि नभोगुणत्वव्यासेधे कार्यद्रव्यान्तरानाविर्भावेप्युत्पादस्वीकारे शब्दोऽनाधारः स्यात्, तथा च बुद्ध्यादयः क्वचिदाश्रिताः गुणत्वात् इति व्यभिचारकलङ्कितमेव स्यात्, ततोऽभ्युपेया कार्यद्रव्यान्तरोद्भवस्तत्रेत्यसिद्धिः साधनस्य। अकारणगुणपूर्वकत्वमपि अस्मदादिबाह्येन्द्रियग्राह्यत्वे सति गुणत्वेन हेतुना पटीयरूपादिकस्येव शब्दस्य विपरीतार्थप्रसाधकत्वेनासानमेव। अयावद्द्रव्यभावित्वमपि विरुद्धार्थप्रसाधनत्वाद् विरुद्धमेव, अस्मदादिबाह्येन्द्रियाध्यक्षत्वे सत्ययावद्द्रव्य भावित्वेन हेतुना पटीयरूपादिवत् शब्दस्य स्पर्शाश्रयद्रव्यगुणत्वोपपत्तेः। अस्मदादिपुरुषान्तरप्रत्यक्षत्वे सति पुरुषान्तराप्रत्यक्षत्वादिति चास्वाद्यमानेन रसादिना व्यभिचार्य्येव।

यत्तु अस्मदादिप्रत्यक्षत्वेन हेतुना परमाणुगुणत्वं शब्दस्य व्यासिद्धं तत्र चिन्तनीयमायुष्मता यथास्मदादिप्रत्यक्षत्वे शब्दस्य परमाणुविशेषगुणत्वस्य विरोधस्तथा गगनगुणत्वस्य कथं न ?; न ह्यस्मदादिप्रत्यक्षत्वं परमाणुविशेषगुणत्वमेवापास्यति शब्दस्य, नाकाशविशेषगुणत्वम्। उभयत्राप्यविशेषात्; यथैव हि परमाणुगुणो रूपादिरस्मदाद्यनध्यक्षस्तथान्तरिक्षगुणो महत्वादिरपि।

यत्तु द्रव्यकर्मत्वमत्याख्यात्या पारिशेष्याद् गुणत्वं प्रत्य-पादि, तदपि गर्ह्यागृह्यम्, कर्मत्वे प्रतिषिद्धेपि द्रव्यत्वप्रतिषेधासम्भवात्, न हि केनचन बाध्यमानं द्रव्यत्वं शब्द उत्पश्यामः ।

यत्तु शब्दो न द्रव्यम् बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपादिवदित्यादिना द्रव्यत्वबाधकं प्रमाणं शब्दे जगाद न्यायकुसुमाञ्जलौ उदयनः तत् प्रामादिकम् । न हि श्रोत्रेन्द्रियव्यवस्थापकत्वेन शब्दस्य नभोगुणत्वं सेद्धुमर्हति, इन्द्रियान्तराग्राह्यग्राहकत्वस्यैव भिन्नेन्द्रियत्वव्याप्यत्वात्, तत्र गुणप्रवेशस्य गौरवकरत्वात् । इत्थं च श्रोत्रेन्द्रियं द्रव्याग्राहकं रूपस्पर्शाग्राहकबहिरिन्द्रियत्वात् लीलावत् इत्यभिप्रायोप्यपहस्तितः, अप्रयोजकत्वात्, रूपस्पर्शाग्राहकबहिरिन्द्रियस्य द्रव्यग्राहकत्वे विरोधाभावात्, द्रव्यग्रहप्रयोजकप्रत्यासत्त्यभिधानेन तद्विरहरूपविपक्षबाधकतर्कानुत्थानात् इति ।

आत्मादिगुणत्वप्रतिषधस्तु तत्र सिद्धसाधनतामेवाधारयदिति सिद्धः पौद्गलिकः शब्द इति ।

अयं पुनः शब्दः त्रिधा, वर्णात्मकः, पदात्मकः, वाक्यात्मकश्चेति । तत्र कादयो वर्णाः प्रसिद्धा एव । पदं वाक्यं च परिचेतुम् "वर्णानामन्योन्यापेक्षाणां निरपेक्षा संहतिः पदम्, पदानां तु वाक्यम्" इति सूत्रमेव पर्यापदिति ॥ ४ ॥

उक्तं प्रमाणम् । अथ नयस्वरूपमाह—

## प्रमाणितार्थांशग्राही अप्रतिक्षिप्तप्रतिपक्षः प्रमातुरभिसन्धिर्नयः ॥ ५ ॥

प्रमाणपरिच्छिन्नार्थस्यांशः, अंशौ अंशा वा येन गृह्यन्ते, तदंशविरुद्धांशः पुनर्न प्रतिक्षिप्यते एवंस्वरूपः प्रतिपत्तुरभिप्रायविशेषो नय इत्यर्हद्वाक्सुधा ।

नन्वेष नयः प्रमाणतः पृथग्लक्षणेन कथं निर्देशपथमानीतः ?; यथार्थज्ञानरूपत्वेनास्य प्रमाणलक्षणेनैव चारितार्थ्यात्, सत्यम्, इदं पुना रहस्यम्, प्रमाणं खलु यथार्थज्ञानात्मकं भवति, नयस्तु यथार्थैकदेशज्ञानात्मकः, इति कथमनयोरैक्यम् ?, कथञ्च प्रमाणलक्षणेन चारितार्थ्यादयुक्तो नयस्य पृथग्लक्षणनिर्देशः ?।

अत्र चायं कण्टकोद्धारप्रकारलेशः।

नन्वर्थैकदेशं गृह्णानोपि नयो न प्रमाणादर्हति भेत्तुम्, वस्तुव्यवसायित्वात् वस्तुव्यवसायित्वेपि प्रमाणत्वानङ्गीकारे सम्प्रतिपन्नानामपि प्रामाण्यानुपपत्तेः। अथ तद्गृह्यमाणोऽर्थैकदेशो न वस्तु, एवं तर्ह्यवस्तुविषयत्वेन मिथ्याज्ञानमेव नय आसज्येतेति। तन्न। अर्थैकदेशो वस्तुतो नास्ति वस्तु, नाप्यवस्तु, अपितु वस्त्वंशः।

तथा चोक्तम्—

"नायं वस्तु न चावस्तु वस्त्वंशः कथ्यते बुधैः।<br>
नाऽसमुद्रः समुद्रो वा समुद्रांशो यथैव हि ॥ १ ॥<br>
तन्मात्रस्य समुद्रत्वे शेषांशस्याऽसमुद्रता।<br>
समुद्रबहुता वा स्यात् तत्त्वे क्वाऽस्तु समुद्रवित् ?" ॥२॥ इति

एवं च वदन्ति वाचकवरश्रीयशोविजयगणयः—

"अयं न संशयः कोटैरैक्यान्न च समुच्चयः।<br>
न विभ्रमो यथार्हत्वादपूर्णत्वाच्च न प्रमा" ॥ १ ॥<br>
न समुद्रोऽसमुद्रो वा समुद्रांशो यथोच्यते।<br>
नाऽप्रमाणं प्रमाणं वा प्रमाणांशस्तथा नयः' ॥ २ ॥ इति।

नयस्वरूपविहीनस्तद्वदाभासमानो नयाभासः। स च स्वाभिसंहितांशप्रतिपक्षांशं निराकरिष्णुरामतः। यथान्यतीर्थिकानां सदसदाद्येकान्तद्योति वाक्यपेटकमिति ॥ ५ ॥

अथ नयभेदानाह—

## नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्द समभिरूढैवम्भूतैः सप्तधा ॥ ६ ॥

नैगमादिभेदेन सप्तविधं नयमामनन्ति जैनाः। अत्राद्यास्त्रयोद्रव्यार्थिकाः। शेषाः पुनः पर्यायार्थिकाः प्रोच्यन्ते। तत्र द्रव्यमेवार्थो विषयो यस्यास्त्यसौ द्रव्यार्थिकः। पर्याय एवार्थो विषयो-यस्यास्त्यसौ पर्यायार्थिकः। एतावेव द्रव्यास्तिक-पर्यायास्तिकौ इति द्रव्यस्थित-पर्यायस्थितौ इति द्रव्यार्थ-पर्यायार्थौ इति चाहुः। गुणस्य पर्यायरूपत्वेन गुणविषयस्य गुणार्थिकस्यापि पर्यायार्थिकरूपत्वाविरोधः। एवं सामान्यविशेषयोर्द्रव्यपर्यायरूपत्वेन तद्विषयसामान्यविशेषार्थिकयोरपि यथायथं तद्व्यपदेशः सङ्गत एवेति सङ्क्षेपतो नयस्य द्वैविध्यमावेदितम्। तस्यैव चायं सप्तविधो विभागः। विस्तरस्त्वशक्यः प्रवक्तुम्। उक्तं हि—

"जावईया वयणपहा तावईया चेव हुंति नयवाया" इति।

तत्र असिद्धार्थसङ्कल्पमात्रावलम्बी नैगमो-नयः। तथाहि—

निगमो विकल्पः सङ्कल्पः इत्यर्थः, तत्र भवः तत्प्रयोजनो वा नैगमः, स च त्रेधा। भूतभाविभवत्कालभेदात्। तत्र अतीतस्य वर्त्तमानवत्कथनं यत्र स भूतनैगमः। यथा—तदेवाद्य दीपोत्सवपर्व, यत्र श्रीमहावीरपरमात्मा मुक्तिमापत्। भाविनि भूतवदुपचारो यत्र स भाविनैगमः, यथा— अर्हन्तः सिद्धतां प्राप्ता एव। कर्त्तुमारब्धमीषन्निष्पन्नं वा वस्तु निर्दिश्यते यत्र स भवन्नैगमः। यथा— पच्यते ओदनः।

यद्वा नैके गमा बोधमार्गा यस्यासौ नैगमः, पृषोदरादित्वात् ककारलोपः।

अथवा निगमेषु लोकेषु भवो बोधो नैगमः । तद्भवत्वं च लोकप्रसिद्धार्थोपगन्तृत्वम्, लोकप्रसिद्धिश्च सामान्यविशेषाद्युभयाभ्युपगमेन निर्वहति ।

स्यादेतत् स्वतन्त्रसामान्यविशेषोभयाभ्युपाये कणादवद् दुर्नयत्वम् । प्रबलतदङ्गीकारे च प्रमाणत्वमेव । यथा स्थानं प्रत्येकं गौणमुख्यभावेन तत्स्वीकारे च सङ्ग्रहव्यवहारान्यतरप्रवेशः ।

सत्यम्, क्षेमङ्करस्तु तत्र तृतीयः पक्षः कक्षीक्रियते । न चोक्तदोषानुषङ्गः, उपधेयसाङ्कर्येऽप्युपाध्योरसाङ्कर्यात् ।

एवं च धर्मद्वयगोचरः, धर्मिद्वयगोचरः, धर्मधर्मिगोचरश्च नैगमो नयः प्रज्ञप्तः ।

तत्र धर्मद्वयगोचरो यथा– सच्चैतन्यमात्मनि इति । अत्र चैतन्याख्यस्य व्यञ्जनपर्यायस्य प्रधानतया विवक्षणम्, विशेष्यत्वात्, सत्त्वाख्यव्यञ्जनपर्यायस्य तु विशेषणत्वात् अमुख्यभावेन, इति प्रोक्तः प्रथमो धर्मद्वयगोचरो नैगमः ।

द्वितीयो धर्मिद्वयगोचरो यथा– वस्तु पर्यायवद् द्रव्यम् इति । अत्र द्रव्याख्यधर्मिणो विशेष्यत्वेन प्राधान्यम् । वस्त्वाख्यस्य तु धर्मिणो विशेषणतयाऽप्राधान्यमिति द्वितीयो धर्मिद्वयगोचरो नैगमः ।

तृतीयो धर्मधर्मिगोचरो यथा– क्षणमेकं सुखी विषयासक्तो जीवः इति । अत्र विषयासक्तजीवस्य धर्मिणो विशेष्यत्वेन प्राधान्यम्, सुखलक्षणस्य पुनर्धर्मस्य तद्विशेषणत्वेनोपात्तत्वात् अप्राधान्यम्, इति । तृतीयो धर्मधर्म्यालम्बनो नैगमः ।

अत्र नैगमेन धर्मधर्मिणोरन्यतरस्यैव प्राधान्यानुभवः, इति प्राधान्येन द्रव्यपर्यायात्मकमर्थं जानानं विज्ञानमेव प्रमाणत्वेनावधेयमिति ।

धर्मद्वय-धर्मिद्वय-धर्मधर्मिरूपत्रयस्यैकान्तिकभेदाभिप्रायो नैगमाभासो नैगमदुर्नय इत्यर्थः, सर्वथाऽर्थान्तरत्वे धर्मिणि धर्माणां वृत्तिविरोधात् । नैयायिक-वैशेषिकदर्शनं चैतदाभासतया प्रत्येतव्यम् ।

सङ्गृहीतपिण्डितार्थमात्रग्राही सङ्ग्रहः । अत्र सङ्गृहीतं महासामान्यम्, पिण्डितं तु सामान्यविशेषः । तत्र महासामान्यं सत्त्वम्, सामान्यविशेषः पुनर्द्रव्यत्वादि । एवं च निःशेषविशेषेष्वौदासीन्येन शुद्धद्रव्यं सन्मात्रमभिमन्वानः, द्रव्यत्वादीन्याद्रियमाणस्तद्विशेषानुपेक्षमाणश्च सङ्ग्रहः । अत्राद्यः परः सङ्ग्रह उच्यते, परसामान्यमात्राङ्गीकरणात् । चरमश्चापरः सङ्ग्रहः, अपरसामान्यद्रव्यत्वाद्यवलम्बनात् । तत्राद्योदाहरणं विश्वमेकं सदविशेषात् इति, एवं ह्युक्ते सदितिज्ञानाभिधानानुवृत्तिलिङ्गानुमितसत्ताकत्वेनैकत्वमशेषार्थानां सङ्गृह्यते ।

निराकृताशेषविशेषस्तु सत्ताद्वैताभिसन्धिः परसङ्ग्रहाभासो ज्ञेयः, दृष्टेष्टबाधनात् । एतदाभासता चाऽद्वैतवादिदर्शनानां साङ्ख्यस्य च ।

द्वितीयोदाहरणं यथा—द्रव्यत्वाभेदात् एकं द्रव्यं धर्मादीति, द्रव्यमित्युक्ते हि भूतभविष्यद्वर्त्तमानकालवृत्तिविवक्षिताविवक्षितपर्यायद्रवणशीलानां जीवाजीवतद्भेदप्रभेदानामेकत्वेन सङ्ग्रहः । तथा घट इत्युक्ते सकलघटव्यक्तीनां घटत्वेनैकत्वसंग्रहः इति ।

सामान्यविशेषाणां सर्वथार्थान्तरत्वाभिप्रायोऽनर्थान्तरत्वाभिप्रायो वाऽपरसङ्ग्रहाभासः प्रतीतिविरोधात् इति ।

सङ्ग्रहगृहीतार्थानां विधिपूर्वकमवहरणं विभजनं भेदेन प्ररूपणं व्यवहारः । परसङ्ग्रहेण हि सद्धर्माधारतया सर्वमेकत्वेन सदिति सङ्ग्रहीतम् । व्यवहारस्तु तद्विभागमभिप्रैति, यत्सत्तद् द्रव्यं पर्यायो वेति । तथैवापरसङ्ग्रहः सर्वद्रव्याणि द्रव्यमिति सर्वपर्यायांश्च पर्याय इति सङ्गृह्णाति । व्यवहारः पुनस्त-

द्विभागमभिप्रैति यद् द्रव्यं तज्जीवादि षोढेति । यः पर्यायः स द्वेधा—क्रमभावी-सहभावी चेति । एवं यो जीवः स संसारी-मुक्तश्चेति, यः क्रमभावी पर्यायः स क्रियारूपोऽक्रियारूपश्चेत्यादि । यः पुनः कल्पनारोपितद्रव्यपर्यायप्रविभागमभिप्रैति, स व्यवहाराभासः, प्रमाणबाधितत्वात्, न हि कल्पनारोपित एव द्रव्यादिप्रविभागः, स्वार्थक्रियाहेतुत्वाभावानुषङ्गात्, नभोम्भोजवत् । व्यवहारस्य चाऽसत्यतायां तदानुकूल्या प्रमाणानां प्रमाणभावो न स्यात्, इतरथा स्वप्नादिविभ्रमानुकूल्येनापि तेषां तदनुषङ्ग इति । एतदाभासश्च चार्वाकमतम् ।

ऋजु प्राञ्जलं वर्त्तमानक्षणस्थायि पर्यायमात्रं प्राधान्यतः सूत्रयन्नभिप्रायः ऋजुसूत्रः । यथा समस्ति सम्प्रति सुखक्षणः इति सतोपि द्रव्यस्यानर्पणात् अतीतानागतक्षणयोश्च नष्टानुत्पन्नत्वेनासम्भूतेः । न चैवं लोकव्यवहारविलोपप्रसङ्गः, नयस्याऽस्यैवंविषयमात्रप्ररूपणात्, लोकव्यवहारस्तु नयचक्रसाध्यः

यस्तु वहिरन्तर्वा द्रव्यं सर्वथा प्रतिक्षिपत्यखिलार्थानां प्रतिक्षणं क्षणिकत्वाभिमानात् स तदाभासः, प्रतीत्यातिक्रमात्, वाधविधुरो हि प्रत्यभिज्ञानादिप्रत्ययो वहिरन्तश्चैकं द्रव्यं पूर्वोत्तरविवर्त्तवर्त्ति प्रसाधयन्नशक्योऽपह्नोतुम् । एतन्नयाभासस्ताथागतमतमिति । कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः । यथा—वभूव भविष्यति भवति रत्नसानुः । अत्रातीतादिकालत्रयभेदात् सुमेरोर्भेदं शब्दनयः प्रतिपद्यते । द्रव्यरूपतयाऽभेदे पुनरदसीये गजनिमीलिकामालम्बते । एतच्च कालभेदे उदाहरणम् । करोति क्रियते घट इति कारकभेदे, तटस्तटी तटमिति लिङ्गभेदे, दाराः कलत्रमित्यादि सङ्ख्याभेदे, एहि मन्ये रथेन यास्यासि यातस्ते पितेति पुरुषभेदे, सन्तिष्ठते अवतिष्ठते इत्युपग्रहभेदे इति ।

... कालादिभेदेन ध्वनेरर्थभेदमेव समर्थयमानः शब्दाभासः,

पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकुर्वाणः समभिरूढाभासः।

यथा–इन्द्रः शक्रः पुरन्दर इत्यादयः शब्दाः भिन्नाभिधेया एव भिन्नशब्दत्वात् करिकुरङ्गतुरङ्गशब्दवत् इति।

एवमित्थं विवक्षितक्रियापरिणामप्रकारेण भूतं परिणतमर्थमभिप्रयन् एवम्भूतः। समभिरूढः खलु सत्यामसत्यां च शकनादिक्रियायां देवराजार्थस्य शक्रव्यपदेशमभिप्रैति, पशोः सत्यामसत्यां च गतिक्रियायां गोव्यपदेशवत् तथारूढेः सद्भावात्। अयं पुनःशकनादिक्रियापरिणामक्षण एव शक्रादिमभिप्रैति न पूजनाभिषेचनक्षणे। न चैवंभूतनयाभिप्रायेण कश्चिदक्रियाशब्दोऽस्ति गौरश्व इत्यादिजातिशब्दानामपि क्रियाशब्दत्वात् गच्छतीति गौः आशुगामीत्यश्वः इति। शुक्लो नील इत्यादिगुणशब्दा अपि क्रियाशब्दा एव, शुचिभवनात् शुक्लः नीलनात् नीलः, इति। देवदत्तः यज्ञदत्तः इत्यादि यदृच्छाशब्दा अपि क्रियाशब्दा एव देवा एनं देयासुरिति देवदत्तः, यज्ञ एनं देयात् इति यज्ञदत्तः। तथा संयोगिसमवायिद्रव्यशब्दाः क्रियाशब्दा एव दण्डोऽस्यास्तीति दण्डी, विषाणमस्यास्तीति विषाणीति। पञ्चतयी तु शब्दानां प्रवृत्तिर्व्यवहारमात्रात् न निश्चयात्। क्रियानाविष्टं वस्तु शब्दवाच्यतया प्रतिक्षिपमाणस्तु एवम्भूतनयाभासः प्रतीति व्याघातात्। यथा–विशिष्टचेष्टाहीनं घटाख्यं वस्तु न घटशब्दाभिधेयं घटशब्दप्रवृत्तिनिमित्तभूतक्रियाशून्यत्वात् पटवदित्यादिः।

एतेषु च नयेषु ऋजुसूत्रान्ताश्चत्वारोऽर्थप्रधानाः शेषास्तु-त्रयः शब्दप्रधाना वेदितव्याः।

कः पुनरत्र वहुविषयो नयः को वाल्पविषयः? इति जिज्ञासामुपशिशमयिषुणा प्रमाणनयतत्त्वालोकालङ्कारीया सप्तसूत्री चेतसि निधेया।

तथाहि—

पूर्वः पूर्वो नयः प्रचुरगोचरः परःपरस्तु परिमितविषयः ॥१॥

सन्मात्रगोचरात्सङ्ग्रहान्नैगमो भावाभावभूमिकत्वाद् भूमविषयः ॥ २ ॥

सद्विशेषप्रकाशकाद्व्यवहारतः सङ्ग्रहः समस्ततत्समूहोपदर्शकत्वात् बहुविषयः ॥ ३ ॥

वर्त्तमानविषयाद् ऋजुसूत्रात् व्यवहारस्त्रिकालविषयावलम्बित्वादनल्पार्थः ॥ ४ ॥

कालादिभेदेन भिन्नार्थोपदेशिनः शब्दाद् ऋजुसूत्रस्तद् विपरीतवेदकत्वान्महार्थः ॥ ५ ॥

प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभिरूढाच्छब्दस्तद्विपर्ययानुयायित्वात् प्रभूतविषयः ॥ ६ ॥

प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवम्भूतात्समभिरूढास्तदन्यथार्थस्थापकत्वान्महागोचरः ॥ ७ ॥ इति ।

एतेषां च सप्तानां नयानामेकैकप्रभेदतः शतभेदभावेन सप्त शतानि भेदाः प्रज्ञप्ताः । यदा तु शब्दादित्रितय्या एक एव शब्दनयो विवक्षितः स्यात् तदैकैकस्य शतविधत्वात् पञ्चशतानि नयानाम् । यदा च सामान्यग्राहिणो नैगमस्य सङ्ग्रहेऽन्तर्भावः विशेषग्राहिणश्चास्य व्यवहारेऽन्तःपातो विवक्ष्यते तदा मूलनयानां षड्विधत्वात् षट्शतानि भवन्ति । यदा तूक्तरीत्या नैगमस्यापार्थक्यात् सङ्ग्रह-व्यवहारर्जुसूत्रलक्षणास्त्रयोऽर्थनयाः, एकस्तु शब्दनयः पर्यायास्तिकनयः तदा नयचतुष्केन चत्वारि शतानि । द्रव्यार्थिक-पर्यायार्थिकभेदेन च द्वैविध्याभिप्राये द्विशती नयानां भवति । कुत्रापि "निच्छयववहारणया मूलिमभेदा नयाण सव्वाणं" इति । उत्कृष्टतोऽसङ्ख्यातास्तु नया भवन्तः प्रागेव प्रादर्शिषत, अयमभिप्रायः– यावन्तो वचनप्रकाराः सावधारणाः ते सर्वे नयाः परसमयास्तीर्थिकासिद्धान्ताः ये च निरवधारणाः

स्याच्छब्दलाञ्छितास्ते नयाः समुदिताः सम्यक्त्वं प्रतिपद्यन्ते । ननु प्रत्येकावस्थायां मिथ्यात्वहेतुत्वात् समुदिताः सर्वे महामिथ्यात्वहेतवः कथं न भविष्यन्ति ? प्रचुरविषलव समुदाये विषप्राचुर्यवत्, उच्यते । परस्परविरुद्धा अपि सर्वे नयाः समुदिताः सम्यक्त्वं भजन्ते एकस्य जिनसाधोर्वशवर्त्तित्वात् नानाभिप्रायभृत्यवर्गवत्, यथा खलु धनधान्यभूम्याद्यर्थं परस्परं विवदमाना अपि बहवः सम्यग्न्यायशालिना केनाप्युदासीनेन महाजनेन युक्तितो विवादकारणान्यपनीय मील्यन्ते, तथेह परस्परविरोधिनोपि नयान् जिनमुनीन्द्रो विरोधं भङ्क्त्वा एकत्र मीलयति । तथा प्रचुराविषलवा अपि प्रौढमन्त्रवादिना निर्विषीकृत्य कुष्टादिरोगिणे प्रदत्ता अमृतरूपत्वं प्रतिपद्यन्तएवेत्यन्यत्र विस्तरः ।

यदूचुः श्रीविनयविजयोपाध्यायाः—

सर्वे नया अपि विरोधभृतो मिथस्ते
सम्भूय साधुसमयं भगवन् भजन्ते ।
भूपा इव प्रतिभटा भुवि सर्वभौम-
पादाम्बुजं प्रधनयुक्तिपराजिता द्राक् ॥ १ ॥ इति ।

स्तुतिकारोप्याह—

नयास्तव स्यात्पदलाञ्छना इमे
रसोपविद्धा इव लोहधातवः ।
भवन्त्यभिप्रेतफला यतस्ततो
भवन्तमार्याः प्रणता हितैषिणः ॥ १ ॥ इति ।

यच्चाहुः स्तुतिद्वात्रिंशिकायां श्रीरत्नप्रभसूरयः—

अहो चित्रं चित्रं तव चरितमेतन्मुनिपते !
स्वकीयानामेषां विविधविषयव्याप्तिवशिनाम् ।
विपक्षापेक्षाणां कथयसि नयानां सुनयतां
विपक्षक्षेप्तॄणां पुनरिह विभो ! दुष्टनयताम् ॥१॥ इति ।

यच्च श्रीसिद्धसेनदिवाकरपादाः—

उदधाविव सर्वसिन्धवः समुदीर्णास्त्वयि नाथ ! दृष्टयः ।
न च तासु भवान्प्रदृश्यते प्रविभक्तासु सरित्स्विवोदधिः ॥ १ ॥
इति ।

यत्पुनर्महामहोपाध्यायश्रीयशोविजयचरणाः—

बौद्धानामृजुसूत्रतो मतमभूद् वेदान्तिनां सङ्ग्रहात्
सांख्यानां तत एव नैगमनयाद् यौगश्च वैशेषिकः ।
शब्दब्रह्मविदां च शब्दनयतः सर्वैर्नयैर्गुम्फिता
जैनी दृष्टिरितीह सारतरता प्रत्यक्षमुद्वीक्ष्यते ॥५॥ इति ॥६॥

उक्तो नयः । साम्प्रतं प्रमाणनयवाक्येन स्वार्थाभिहितावनुगन्तव्यां सप्तभङ्गीं निर्दिशति—

## तद्वाक्यं सप्तभङ्ग्यनुपाति ॥ ७ ॥

तयोः प्रमाणनययोर्वाक्यं सप्तभङ्गीमनुपतति अनुव्रजतीत्येवं शीलं प्रज्ञप्तम् । ननु का सप्तभङ्गी ? इति चेत् ? अत्राहू रत्नाकरस्रष्टृब्रह्माणो वादिदेवसूरयः—

" एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादविरोधेन व्यस्तयोः समस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितः सप्तधा वाक्प्रयोगः सप्तभङ्गी " इति ।

अयमर्थः । एकत्र जीवादिवस्तुनि एकैकसत्त्वादिधर्मविषयप्रश्नवशात् अविरोधेन प्रत्यक्षादिबाधपरिहारेण पृथग्भूतयोः समुदितयोश्च विधिनिषेधयोः पर्यालोचनया कृत्वा स्याच्छब्दलाञ्छितो वक्ष्यमाणैः सप्तभिः प्रकारैर्वचनविन्यासः सप्तभङ्गी । भज्यन्ते भिद्यन्तेऽर्था यैस्ते भङ्गाः वचनभेदाः ततः समाहृता सप्त भङ्गाः सप्तभङ्गीतिपदव्युत्पत्तिः ।

अथेयं पदव्यावृत्तिः—

नानावस्त्वाश्रयविधिनिषेधकल्पनया शतभङ्गीप्रसङ्ग्युदा-

सार्थम् "एकत्रवस्तुनि" इति । एकत्रापि जीवादिवस्तुनि विधीयमान निषिध्यमानानन्तधर्मपर्यालोचनयाऽनन्तभङ्गीप्रसक्तिव्यावृत्तये "एकैकधर्मपर्यनुयोगवशात्" इति । अनन्तेष्वपि धर्मेषु प्रतिधर्मं पर्यनुयोगस्य सप्तधैव प्रवर्त्तमानत्वात् तत्प्रतिवचनस्यापि सप्तविधत्वमेवोपपन्नमित्येकैकस्मिन् धर्मे एकैकैव सप्तभङ्गी साधीयसी एवं चानन्तधर्मापेक्षया सप्तभङ्गीनामानन्त्यं यदुपतिष्ठते तदभिमतमेव । प्रत्यक्षादिविरुद्धसदाद्येकान्तविधिप्रतिषेधकल्पनयापि प्रवृत्तस्य वचनप्रयोगस्य सप्तभङ्गीत्वानुषङ्गभङ्गार्थम् "अविरोधेन" इति ।

अत्र "पर्यनुयोगवशात्" इति ग्रहणं प्रतिपाद्यप्रश्नानां सप्तविधानामेव सद्भावात् सप्तैव भङ्गा इति नियमसूचनार्थम् । ननु प्रश्नानां सप्तविधत्वं कुतः ? जिज्ञासानां सप्तविधत्वात् इतिब्रूमः प्राश्निकनिष्ठजिज्ञासाप्रतिपादकं वाक्यं हि प्रश्न इत्युक्तेः।

ननु जिज्ञासैव सप्तधा इति कथम् ? सप्तधा संशयानामुत्पत्तेः। ननु तथापि संशयस्य सप्तविधत्वं कुत इति वक्तव्यम् ? तद्विषयीभूतधर्माणां सप्तविधत्वात् इत्येव गृहाण ।

ननु के ते सप्त धर्माः ? उच्यते ।

कथञ्चित् सत्त्वम् १ कथञ्चिदसत्त्वम् २ क्रमार्पितोभयम् ३ अवक्तव्यत्वम् ४ कथञ्चित् सत्त्वविशिष्टावक्तव्यत्वम् ५ कथञ्चिदसत्त्वविशिष्टावक्तव्यत्वम् ६ क्रमार्पितोभयविशिष्टावक्तव्यत्वम् ७ चेति । एवं च दर्शितधर्मविषयकाः सप्तैव संशयाः ।

अथेमे सप्त भङ्गाः ।

स्यादस्त्येव घटः इति विधिकल्पनया प्रथमो भङ्गः ॥ १ ॥

स्यान्नास्त्येव घटः इति निषेधकल्पनया द्वितीयो भङ्गः॥२॥

स्यादस्त्येव स्यान्नास्त्येवेति क्रमेण विधिनिषेधकल्पनया तृतीयः ॥ ३ ॥

स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः ।४

स्यादस्त्येव स्यादवक्तव्यमेवेतिविधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चमः ॥ ५ ॥

स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः ॥ ६ ॥

स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद् विधिनिषेधकल्पनया च सप्तमः ॥७ ॥ इति ।

तत्र स्यादस्त्येव वा नवा घट इति कथञ्चित् सत्त्वतदभावकोटिकः प्रथमः संशयः ।

स्यादेतत् कथञ्चित् सत्त्वस्याभावः कथञ्चिदसत्त्वम्; तस्य न संशयविषयत्वसम्भवः कथञ्चित् सत्वेन सह विरोधाभावात् ।

"एकधर्मिकव्याहतनानाधर्मप्रकारकप्रत्ययो हि संशयः" नत्वेकधर्मिकनानाधर्मप्रकारकज्ञानमात्रम्, अन्यथा अयं घटो द्रव्यम् इत्यादिघटत्वद्रव्यस्वरूपनानाधर्मप्रकारकज्ञानस्यापि संशयत्वप्रसङ्गात् । मैवम् । दर्शितसंशये कथञ्चिदस्तित्वसर्वथास्तित्वयोरेव कोटित्वेनोक्तानुपपत्तेरनवकाशात् तयोः परस्परं विरोधात् । एवं द्वितीयादिसंशयप्रकारा अप्यूहनीयाः । निरुक्तसंशयेन च घटे वास्तवसत्त्वनिर्णयः सम्पादनीय इति जिज्ञासोदेति जिज्ञासां प्रति संशयस्य हेतुत्वात् तादृशजिज्ञासया "घटः किं स्यादस्त्येव" प्रति प्रश्नः प्रादुर्भवति प्रश्ने जिज्ञासाया हेतुत्वात् । तादृशप्रश्नज्ञानाच्च प्रतिपादकस्य प्रतिपिपादयिषा समुन्मिषति । प्रतिपिपादयिषया चोत्तरावतारः, इत्युक्तप्रणाल्या धर्मसप्तविधत्वाधीना भङ्गानां सप्तविधत्वसिद्धिः । स्यादेतत् यदि नाम घटादौ अस्तित्वप्रमुखाः सप्तधर्माः प्रामाणिकाः स्युः तदा तद्विषयसंशयानातिक्रमेण सप्तभङ्गी सिध्येत् तदेव तु दुरुपपदम् । सत्त्वासत्त्वयोर्भेदा-

भावात् । यद्धि स्वरूपेण सत्त्वं तदेव पररूपेणासत्त्वम् तथा च प्रथमद्वितीयभङ्गौ न घटासंटकमाटीकिषाताम्, तदन्यतरेणैव चारितार्थ्यात् ।

अयमिह समाधिः—

स्वरूपाद्यवच्छिन्नं सत्त्वम्, पररूपाद्यवच्छिन्नमसत्त्वम्, तथाचावच्छेदकभेदात्तयोर्भेदसिद्धिः सुलभैव । अपरथा स्वरूपेणेव पररूपेणापि सत्त्वानुषक्तेः, पररूपेणेव स्वरूपेणापि असत्त्वप्रसक्तेश्च । किंच सत्त्वं खलु वृत्तिमत्त्वम्, भूतले घटोऽस्तीत्यादौ भूतलनिरूपितवृत्तिताशाली घटः इति बोधात् । असत्त्वं चाभावप्रतियोगित्वम्, भूतले घटो नास्तीत्यादौ भूतलनिष्ठाभावप्रतियोगी घटः इति प्रत्ययात् । एवं चोत्तान एव सत्त्वासत्त्वयोः स्वरूपभेदः ।

अपि च त्रैलक्षण्यं पाञ्चलक्षण्यं वा साधनस्योच्चानास्तपनबन्धुमुपासीनाः कक्षभक्षाक्षचरणचरणचन्द्रचकोराश्च हेतोः सपक्षसत्त्वापेक्षया विपक्षासत्त्वं पृथग्भावेनैवामंसत, इतरथा तद्व्याघातापत्तेः । ननु कथञ्चित्सत्त्वापेक्षया क्रमार्पितोभयस्य को विशेषः ? न हि शक्यं प्रत्येकघटपटापेक्षया घटपटोभयं भिन्नरूपेण प्रत्येतुम् इति चेन्न प्रत्येकापेक्षयोभयस्य भिन्नत्वेन प्रतीतिसिद्धत्वात् । अत एव प्रत्येकघकार–टकारापेक्षया क्रमार्पितोभयरूपघटपदस्यातिरिक्ततयाभ्युपगमः प्रवादिनां विकस्वरः । अपरथा प्रत्येकघकाराद्यपेक्षया घटपदस्याभिन्नत्वे घकाराद्युच्चारणेनैव घटपदज्ञानसम्भवेन घटत्वप्रकारकोपस्थितिसम्भवात् शेषोच्चारणवैयर्थ्यप्रसङ्गात् । अत एव च प्रत्येकपुष्पापेक्षया मालायाः कथञ्चिद्भेदः सर्वानुभवसिद्धः इति नानतिरिक्तं कथञ्चित् सत्त्वापेक्षया क्रमार्पितोभयम् । एवं शेषा अपि विशेषरूपेण मीमांसनीयाः, अधिकन्यवच्छेदश्च चिन्तनीयोऽन्यतः, इह तु वक्त-

व्यबाहुल्यात् ग्रन्थलघिमाभिसन्धानाच्च विरम्यते प्रतानतः ।

तत्र धर्मान्तरमनपाकुर्वत् विधिविषयकबोधोत्पादि वाक्यं प्रथमो भङ्गः । स च स्यादस्त्येव घट इति वचनरूपः ।

निषेधविषयकबोधजनकं पुनस्तथा वाक्यं द्वितीयो भङ्गः । स च स्यान्नास्त्येव घट इत्याकारः ।

अत्र च स्वरूपादिभिरस्तित्वमिव नास्तित्वमपि स्यादित्यनिष्टार्थनिवृत्तये " स्यादस्त्येव " इत्येवकारः, तेन स्वरूपादिभिरस्तित्वमेव न नास्तित्वमित्यवधारणम् ।

अयं चैवकारस्त्रेधा । अयोगव्यवच्छेदबोधकः, अन्ययोग व्यावृत्तिगमकः, अत्यन्तायोगव्युदासज्ञापकश्चेति ।

तत्र विशेषणसङ्गतैवकारोऽयोगव्यवच्छेदबोधको बोद्धव्यः । यथा शङ्खः पाण्डर एवेति । अयं चात्र परिष्कारः, उद्देश्यतावच्छेदकसमानाधिकरणाभावाप्रतियोगित्वमयोगव्यवच्छेदः, प्रकृते च शङ्खत्वमुद्देश्यतावच्छेदकम्, शङ्खत्वेन शङ्खमुद्दिश्य पाण्डरत्वस्य तत्र विधानात् तथाच शङ्खत्वसामानाधिकरण्यवान् न तावत् पाण्डरत्वाभावो भवितुमर्हति तत्र तत्सत्त्वात् अपितूदासीनाभावः तत्प्रतियोगित्वं तत्र, अप्रतियोगित्वं पुनः पाण्डरत्वे आयातमितिशङ्खत्वसमानाधिकरणाभावाप्रतियोगिपाण्डरत्ववान् शङ्ख इति बोधः ।

विशेष्यसङ्गतैवकारोऽन्ययोगव्यवच्छेदबोधकः यथा पार्थ एव धनुर्धरः इति । अन्ययोगव्यवच्छेदः पुनर्विशेष्यभिन्नतादात्म्यव्यावर्त्तनम् । तत्र खल्वेवकारेण पार्थान्यतादात्म्याभावो धनुर्धरे बोधितो भवति तथाच पार्थान्यतादात्म्याभाववद्धनुर्धराभिन्नः पार्थ इति बोधः ।

क्रियासङ्गतैवकारोऽत्यन्तायोगव्यवच्छेदगमकः यथा नीलं कमलं भवत्येवेति । अत्यन्तायोगव्यवच्छेदश्चोद्देश्यतावच्छेदकव्यापकाभावाप्रतियोगित्वम् । प्रकृते चोद्देश्यतावच्छेदकं कम-

लत्वम्, तद्व्यापकः पुनरत्यन्ताभावः न तावत् नीलाभेदाभावः शक्यते धर्त्तुम्, क्वचित्कमले नीलाभेदस्यापि सद्भावात्। अपित्वन्याभावः, तत्प्रतियोगित्वं तत्र, अप्रतियोगित्वं पुनर्नीलाभेदे प्राप्तमिति कमलत्वव्यापकात्यन्ताभावाप्रतियोगिनीलाभेदवत्कमलमिति तत्र बोधः।

तदुक्तम्—

अयोगं योगमपरैरत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः॥ १॥
विशेषणविशेष्याभ्यां क्रियया यः सहोदितः।
विवक्षातोऽप्रयोगेऽपि तस्यार्थोऽयं प्रतीयते॥ २॥
व्यवच्छेदफलं वाक्यं यतश्चैत्रो धनुर्धरः।
पार्थो धनुर्धरो नीलं सरोजमिति वा यथा॥ ३॥ इति।

स्यादेतत् स्यादस्त्येव घटः इत्यादावत्यन्तायोगव्यवच्छेदबोधकेन एवकारेण भाव्यम्, क्रियासङ्गतत्वात्। एवं च विवक्षितार्थासिद्धिः कुत्रचिद् घटे अस्तित्वाभावेपि तादृशप्रयोगसम्भवात् यथा हि क्वचित्कमले नीलत्वविरहेपि "नीलं सरोजं भवत्येव" इति प्रयोगः इति चेत्? अत्राहुः—

प्रकृतेऽयोगव्यवच्छेदबोधक एवकारोस्ति क्रियासङ्गतैवकारस्यापि कुत्रचित् अयोगव्यवच्छेदबोधकत्वदर्शनात् "यथा ज्ञानमर्थं गृह्णात्येव" इत्यादौ ज्ञानत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्यार्थग्राहकत्वे बोधः तत्राप्यत्यन्तायोगव्यवच्छेदबोधस्योपगमे "ज्ञानमर्थं गृह्णात्येवेतिवत्" ज्ञानं रजतं गृह्णात्येवेति प्रयोगप्रसङ्गः सकलज्ञानेषु रजतग्राहकत्वस्याभावेपि यत्किञ्चिज्ज्ञाने रजतग्राहित्वभावेनैव ज्ञानं रजतं गृह्णात्येवेत्यन्तायोगव्यवच्छेदबोधकैवकारप्रयोगस्य निर्बाधात्। तद्वत प्रकृते क्रियासङ्गतोप्येवकारोऽयोगव्यवच्छेदबोधकत्वेनाभ्युपेयः इति।

एवं च स्यादस्त्येव घट इत्यादौ घटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्यैवकारार्थस्य अस्तित्वे धात्वर्थेऽन्वयेन घटत्वसमानाधिकरणात्यन्ताभावाप्रतियोग्यस्तित्ववान् घट इति बोधः, घटत्वसमानाधिकरणस्तावदत्यन्ताभावो नास्तित्वात्यन्ताभावः किन्त्वन्याभावः तदप्रतियोगित्वस्यास्तित्वे सत्त्वात् । न चात्र घटत्वसमानाधिकरणात्यन्ताभावोऽस्तित्वात्यन्ताभावोपि शक्यते धर्तुम्, अस्तित्वाभावस्य नास्तित्वस्य घटे सत्त्वात् इति वाच्यम्, प्रतियोगिव्यधिकरणाभावाप्रतियोगित्वस्यैवकारार्थस्याभिप्रायेणोक्तदोषाभावात् तादृशाभावे चोद्देश्यतावच्छेदकसामानाधिकरण्यमुद्देश्यबोधकपदसमभिव्याहारलभ्यम् । प्रकृते उद्देश्यतावच्छेदकं घटत्वं तत्सामानाधिकरण्यं प्रतियोगिव्यधिकरणाभावेऽन्वेति, उद्देश्यघटपदसमभिव्याहारात् ।

एवं च घटत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावाप्रतियोग्यस्तित्ववान् घटः इति बोधः । तथा च नोक्तो दोषः घटसमानाधिकरणाभावपदेन अस्तित्वाभावस्य गृहीतुमशक्यत्वात् तथाविधाभावस्य प्रतियोगिनास्तित्वेन सामानाधिकरण्येन वैयधिकरण्याभावात् ।

ननु— स्याच्छब्देनैवानेकान्तबोधनेऽस्त्यादिवचनमनर्थकमिति चेत् न स्यात्पदेनानेकान्तस्य सामान्यतोऽवबोधनेपि विशेषरूपेण बोधनायास्त्यादिशब्दप्रयोगात् । तदुक्तम्—

स्याच्छब्दादप्यनेकान्तसामान्यस्यावबोधने ।
शब्दान्तरप्रयोगोऽत्र विशेषप्रतिपत्तये ॥ १ ॥ इति

यथा खलु वृक्षो न्यग्रोधः इति वृक्षत्वेन रूपेण न्यग्रोधस्य बोधनेपि न्यग्रोधत्वेन रूपेण न्यग्रोधबोधनाय न्यग्रोधपदप्रयोगः ।

स्याच्छब्दस्य द्योतकत्वपक्षे तु न्यायप्राप्त एवास्त्यादिप्रयोगः । अस्त्यादिशब्देनाभिहितस्यानेकान्तस्य स्यात्पदेन

द्योतनात् । स्यात्पदाभावे तु सर्वथैकान्तव्यवच्छेदेनानेकान्तप्रतिपत्तिः कुतः ? एवकारावचने विवक्षितार्थाप्रतिपत्तिवत् इति युक्तं स्यात्पदम् इति ।

एवं च स्यादस्त्येव घटः इत्यस्य स्वरूपाद्यवच्छिन्नास्तित्वाश्रयो घटः । स्यान्नास्त्येव घट इत्यस्य च पररूपाद्यवच्छिन्ननास्तित्वाश्रयो घटः, अवच्छेदकभेदेन एकत्रैवास्तित्वनास्तित्वयोरविशेपात् कः खलु न प्रत्येति एकत्रैव धूपघटादाववच्छेदकभेदेन शीतोष्णस्पर्शौ । कश्च प्रकृते एकत्रैव वस्तुनि सर्वत्र स्वरूपेण सत्त्वस्य पररूपेणासत्त्वस्य च वर्त्तमानत्वे बाधः, इतरथा हि वस्तुत्वमेव विलीयेत, स्वपररूपोपादानापोहनव्यवस्थाप्यं हि वस्तुनो वस्तुत्वम् ।

ननु घटस्य किं स्वरूपं किंवा पररूपम् इति चेत् ? अत्र ब्रूमः— घट इत्यादिबुद्धौ प्रकारतया भासमानो घटपदशक्यतावच्छेदकीभूतस्तिर्यक्सामान्यरूपो यो घटत्वाख्यो धर्मः स घटस्य स्वरूपम् तदितरत् पटत्वादि पररूपम् । तत्र च घटत्वादिस्वरूपेणेव पटत्वादिपररूपेणापि घटस्य सत्त्वाङ्गीकारे पटात्मकत्वप्रसङ्गः पटत्वादिनेव घटत्वादिनाप्यसत्त्वे शशशृङ्गवच्छून्यत्वापत्तिः ।

एवं घटस्य स्वद्रव्यं मृद्द्रव्यम् परद्रव्यं सुवर्णादि । तथाच घटो मृदात्मनास्ति सुवर्णाद्यात्मना नास्ति घटस्य स्वद्रव्यात्मनेव परद्रव्यात्मनापि सत्त्वे घटो मृदात्मको न सुवर्णात्मा इति नियमो न स्यात् तथाच द्रव्यप्रतिनियमव्याहतिः ।

एवं घटस्य स्वीयं क्षेत्रं भूतलादि परक्षेत्रं कुड्यादि घटः स्वीयक्षेत्रेऽस्ति परत्र नास्ति । घटस्य स्वक्षेत्रवत् परत्रापि सत्त्वाङ्गीकारे प्रतिनियतक्षेत्रत्वानुपपत्तिः । परक्षेत्र इव स्वक्षेत्रेऽप्यसद्भूतत्वे च साधारत्वविरोधः ।

तथा घटस्य स्वीयः कालो वर्त्तमानकालः परकालोऽती-

तादिः तत्र स्वकालेऽस्ति परकाले नास्ति घटस्य स्वकाल इव परकालेऽपि सत्त्वे प्रतिनियतकालत्वं न स्यात् तथाच किं स्यात् ?, इति चेत् नित्यत्वमेव स्यात्। परकालवत्स्वकीयकाले-प्यसत्त्वोररीकारे सकलकालासम्बन्धित्वप्रसङ्गेनावस्तुत्वप्रसङ्गः, कालसम्बन्धिन एव वस्तुत्वात् । एवंरीत्या स्वद्रव्यक्षेत्रका-लभावेन सत्त्वं परद्रव्यकालक्षेत्रभावेनासत्त्वं च क्रोडीकुर्वाणः पदार्थः स्वरूपप्रतिष्ठानो वेदितव्यः, इतरथा नभोनलिनायमा-न एव । अपिचास्तित्वं नास्तित्वेनाविनाभूतमस्ति, समनियते खलु अस्तित्व-नास्तित्वे इति भावः, अस्तित्वं विहाय नास्ति-त्वस्य नास्तित्वं विहायास्तित्वस्य च प्रमाणबाधात् इति अ-स्तित्वेनाभ्युपजग्मानेषु वस्तुजातेषु तत्सहचरनास्तित्वमवश्य-प्रतिपत्तव्यमभियुक्तैः । न च शशविषाणादौ नास्तित्वमस्ति-त्वसहचरं कुतः ? इति प्रेर्यम्, नास्तित्वाधिकरणरूपं शश-विषाणादि हि किञ्चिदभिमतं चेत् तर्हि नियमेन तत्रास्तित्वं मन-नीयम्, स्वरूपबाह्यस्यावस्तुत्वेनाधिकरणत्वानर्हतया नास्ति-त्ववृत्तेस्तत्र दुर्वचत्वात्। अथ च तत् किञ्चिदेव न; तर्हि कुत्र ना-स्तित्वेऽभिमेनानेऽस्तित्वसाहचर्याभावमापादयसि ? इति सम्यग् भावय ।

अपिच गोमस्तकवृत्तित्वेन यदस्तीति प्रसिद्धं विषाणम् तत् खरादिशिरोवृत्तित्वाभावेन नास्तीति निर्णीयते ।

मेषादिसमवेतत्वेन यानि रोमाणि सन्तीति प्रसिद्धानि तान्येव कूर्मादिसमवेतत्वेन न सन्तीत्यध्यवसीयते ।

वनस्पतिसंसृष्टत्वेन यत् कुसुममस्तीति प्रसिद्धम्, तदेव गगनसम्बन्धित्वेन नास्तीत्यवधार्यते तथाचोपपन्नमेव नास्ति-त्वसहचरास्तित्वगुम्फितं जगत् इति प्रथमद्वितीयभङ्गस्वरूप-निरूपणम् ।

अथ "घटः स्यादस्त्येव स्यान्नास्त्येव च" इति तृतीयो

भङ्गः । घटादिरूपैकधर्मिविशेष्यकक्रमार्पितविधिप्रतिषेधप्रकारकबोधजनकवाक्यत्वं तल्लक्षणम् । क्रमार्पितस्वरूपपररूपाद्यपेक्षयाऽस्तित्वनास्तित्वरूपो घट इति निरूपितप्रायम् ।

सहार्पितस्वरूपपररूपादिविवक्षायां "स्यादवक्तव्य एव घटः" इति तुरीयो भङ्गः । घटादिविशेष्यकावक्तव्यत्वप्रकारकबोधजनकवाक्यत्वं तल्लक्षणम् ।

ननु कथमवक्तव्यत्वं घटस्य ? उच्यते— सर्वोऽपि शब्दो मुख्यभावेन न सत्त्वासत्त्वे युगपत्प्रतिपादयति तथाप्रतिपादने शब्दस्य शक्त्यभावात् सर्वस्य पदस्यैकपदार्थविषयत्वोपपत्तेः, तथाहि— अस्तिपदं सत्तावाचकं नासत्त्वं प्रतिपादयति, एवं नास्तीतिपदमसत्त्वाभिधायि न सत्तां बोधयितुमर्हति । ननु सर्वपदानामेकार्थत्वनियमे नानार्थकपदप्रसिद्धिः कथं निर्वहतीति चेत् अत्राहुः—

गवादिपदस्यापि स्वर्गाद्यनेकार्थतया प्रसिद्धवतस्तत्त्वतोऽनेकत्वात् सादृश्योपचारादेव तस्यैकत्वेन व्यवहारात् । अन्यथा सकलार्थस्याप्येकशब्दवाच्यत्वापत्तेः । अर्थभेदेनानेकशब्दप्रयोगवैफल्यात्, यथैव खलु समभिरूढनयापेक्षया शब्दभेदाद् ध्रुवोऽर्थभेदः तथैवार्थभेदादपि शब्दभेदः सिद्ध एव, इतरथा वाच्यवाचकनियमव्यवहारविलोपप्रसङ्गादिति ।

ननु यथासमयं शब्दप्रवृत्तेः युगपत् सदसत्त्वयोः संकेतितः शब्दस्तदभिधायी भवतु ? इति चेत्तदप्यरम्यम्, सङ्केतस्यापि वाच्यवाचकशक्त्यनुरोधेनैव प्रवृत्तेः न नाम क्वचन वाच्यवाचकशक्त्यतिक्रमेण सङ्केतप्रवृत्तिर्दृष्टचरीति क्रमेणैव संकेतितपदस्याप्यर्थद्वयबोधनशक्तिसिद्धिः ।

पुष्पदन्तादिशब्दानामपि क्रमेणैवार्थद्वयप्रतिपादनसामर्थ्यमवसेयम्, "शतृशानचौ सत्" इति शतृशानचोः सङ्केतिकसत्पदवत् इति ।

अथ सेनामालावनेत्यादिशब्दानामनेकार्थविषयत्वमस्त्येवेति चेन्न करि– कुरङ्ग– तुरङ्ग–मातङ्गादिसमूहस्यैवैकस्य सेनाशब्देनाभिधानात् पुष्पसमूहस्य मालापदेन वृक्षसमूहस्य वनशब्देन चोक्तेर्नानेकार्थप्रतिपादनं सम्भवत्येकशब्दस्य ।

ननु "वृक्षौ" इति पदं वृक्षद्वयबोधकम्, "वृक्षाः" इति च बहुवृक्षबोधकं कथमुपपादुकं स्यात् इति चेत् ? पाणिन्यादीनामेकशेषारम्भात् अन्येषामभिधानस्य स्वाभाविकत्वात् इत्येवाभङ्गुरमुत्तरं निधेयं चेतसि । तत्रैकशेषपक्षे द्वाभ्यामेव वृक्षशब्दाभ्यां वृक्षद्वयस्य बहुभिरेव वृक्षशब्दैर्बहूनां वृक्षाणामभिधानात् । कुत एकशब्दस्य सकृदनेकार्थविषयत्वम् लुप्तावशिष्टशब्दयोः सादृश्यात् वृक्षरूपार्थस्य समानत्वाच्चैकत्वोपचारेण तत्रैकशब्दप्रयोगोपपत्तेः । अभिधानस्य स्वाभाविकत्वपक्षे च वृक्षशब्दो द्विबहुवचनान्तः स्वभावत एव द्वित्वबहुत्वविशिष्टं वृक्षरूपार्थमाचष्टे । यद्यपि द्वितीयपक्षे एकस्यैव वृक्षपदस्यानेकवृक्षबोधकत्वमायातम्, तथाप्यनेकधर्मविशिष्टार्थविबोधकत्वमेकपदस्य नास्तीति नियमो विज्ञेयः, एवं च वृक्षा इति बहुवचनान्तेनापि वृक्षपदेन वृक्षत्वरूपैकधर्मेणैव बोधो नानेकधर्मेणानेकवस्तुनः, तथैव प्रकृतेप्यास्तिप्रभृतिपदेनाप्यास्तित्वादिरूपैकधर्मेणैव बोधसम्भवः न पुनर्धर्मान्तरेण ।

ननु "वृक्षाः" इति पदमेवास्ति "तदन्तं पदम्" इति वचनात् अत्र हि तत्पदेन स्यादित्यादिविभक्तिपरिग्रहः, एवं चैकपदस्याप्यनेकधर्मेण बोधकत्वं दृश्यत एवेति किमीयोऽयं न्यायः "एकपदस्यानेकधर्मेण बोधकत्वं नास्ति" इति

उक्तं हि–

"अनेकमेकं च पदस्य वाच्यं वृक्षा इति प्रत्ययवत्प्रकृत्या" इति ।

अत्राहुः–

एकपदस्य प्राधान्येनानेकधर्मविशिष्टाववोधकत्वं नास्ती-

ति नियमाभिप्रायः। प्रकृते च प्रथमतो वृक्षशब्दो वृक्षत्वधर्मविशिष्टं द्रव्यं बोधयति, ततो लिङ्गं सङ्ख्यां चेति शाब्दबोधः क्रमेणोदेति

यदाह—

स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्।
समवेतस्य तु वचने लिङ्गं सङ्ख्यां विभक्तियुक्तः सन्॥१॥ इति।

एवं च प्रधानतया वृक्षत्वविशिष्टबोधः, गुणभावेन पुनर्बहुत्वसङ्ख्यायाः इति सर्वमवदातम्। नन्वेवं तर्हि प्राधान्येनाशेषधर्मात्मकस्य वस्तुनः प्रकाशकं प्रमाणवाक्यं कथमुपपत्तिवीथिमारोहत् ?, इति चेत् कालादिभिरभेदवृत्त्या अभेदोपचारेण वा द्रव्यपर्यायनयार्पितेन सर्वस्य वस्तुन उक्ते इत्युक्तं भविष्यति।

व्यस्तसमस्तद्रव्यपर्यायावाश्रित्य चरमभङ्गत्रयमुपपत्तिमानेयम् तथाहि— व्यस्तद्रव्यं समस्तौ सहार्पितौ द्रव्यपर्यायावाश्रित्य "स्यादस्त्येव स्यादवक्तव्य एव घटः" इति पञ्चमो भङ्गः। घटादिरूपैकधर्मिविशेष्यक-सत्त्वविशिष्टाऽवक्तव्यत्वप्रकारकबोधजनकवाक्यत्वं तल्लक्षणम्, तत्र द्रव्यार्पणात् अस्तित्वस्य युगपद्द्रव्यपर्यायार्पणादवक्तव्यत्वस्य च विवक्षितत्वात्।

तथा व्यस्तं पर्यायं समस्तौ द्रव्यपर्यायावाश्रित्य "स्यान्नास्त्येव स्यादवक्तव्य एव घटः" इति षष्ठो भङ्गः। तल्लक्षणं च घटादिरूपैकधर्मिविशेष्यक- नास्तित्वविशिष्टावक्तव्यत्वप्रकारकबोधजनकवाक्यत्वम्।

एवं व्यस्तौ क्रमार्पितौ समस्तौ सहार्पितौ च द्रव्यपर्यायावाश्रित्य "स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्य एव घटः" इति सप्तमो भङ्गः। तल्लक्षणं च घटादिरूपैकवस्तुविशेष्यक-सत्त्वासत्त्वविशिष्टावक्तव्यत्वप्रकारकबोधजनकवाक्यत्वम् इति॥

ननु चानेकान्तेपि विधिप्रतिषेधरूपा सप्तभङ्गी प्रवर्त्तते न वा ?, प्रवर्तमानत्वेऽनेकान्तस्य निषेधकल्पनायामेकान्त एव प्राप्त इति तत्पक्षोक्तदोषानुषङ्गः । अप्रवर्त्तमानत्वे सर्वार्थसार्थस्य सप्तभङ्गीमङ्गभङ्गप्रसङ्गः इति चेत्, उच्यते-एकान्तस्तावद् द्विविधः, सम्यगेकान्तः, मिथ्यैकान्तश्च । एवमनेकान्तोपि द्वेधा, सम्यगनेकान्तः मिथ्यानेकान्तश्च । तत्र सम्यगेकान्तस्तावत् प्रमाणविषयीभूतानेकधर्मात्मकवस्तुनिष्ठैकधर्मगोचरो धर्मान्तराप्रतिषेधकः, मिथ्यैकान्तस्तु धर्मान्तरनिराकरणप्रावण्येन प्रतिनियतधर्ममात्रपक्षपाती । एवं सम्यगनेकान्तः प्रामाणिकास्तित्वादिकानेकधर्मनिरूपणप्रवणः । मिथ्यानेकान्तश्च विरुद्धनानाधर्मपरिकल्पनरूपः । तत्र सम्यगेकान्तो नयः, मिथ्यैकान्तो दुर्नयः । सम्यगनेकान्तः प्रमाणम्, मिथ्यानेकान्तश्च प्रमाणाभासः । एवं च सम्यगेकान्तानेकान्तभेदावाश्रित्य प्रमाणनयार्पणाभेदात् स्यादेकान्तः, स्यादनेकान्तः, स्यादुभयः, स्यादवक्तव्यः, स्यादेकान्तश्चावक्तव्यश्च, स्यादनेकान्तश्चावक्तव्यश्च, स्यादेकान्तोऽनेकान्तश्चावक्तव्यश्चेति सप्तभङ्गी योजनीया । तत्र नयार्पणादेकान्तो भवति, एकधर्मगोचरत्वात् नयस्य, प्रमाणाच्चानेकान्तो भवति, अशेषधर्मनिर्णयरूपत्वात् प्रमाणस्येति ।

यदि पुनरनेकान्तोऽनेकान्त एव स्यात् नत्वेकान्तः, तदैकान्ताभावे तत्समूहरूपस्यानेकान्तस्याप्यभावप्रसक्तिः शाखाद्यभावे वृक्षाद्यभाववत् इति ।

भवति च नित्यत्वादिधर्मेष्वप्येषा सप्तभङ्गी निरूपयितव्या।

तथाहि-स्यान्नित्यो घटः स्यादनित्यो घटः इति घटस्य हि द्रव्यरूपेण नित्यत्वम् पर्यायरूपेणानित्यत्वम्, एवं चोत्पादव्ययध्रौव्ययुक्तं वस्तु सद्रूपेण भवितुमर्हति तदन्यथारूपेण वस्तुत्वानुपपत्तेः, अर्थक्रियासामर्थ्यं हि वस्तुनो लक्षणमालक्षयांबभूवांसो धीराः, अर्थक्रियासामर्थ्यस्य चैकान्तानित्यानित्ये प्रागेव प्रति-

ननूत्पादादेः परस्परं भिन्नत्वे कथमेकं त्र्यात्मकम् ?, अभिन्नत्वेऽपि कथं तथा ? इति चेत्, मैवम्, कथञ्चिद् भिन्नलक्षणत्वेनामीषां कथञ्चिद् भेदोपपत्तेः, तथाहि—उत्पाद-व्ययध्रौव्याणि स्याद् भिन्नानि, भिन्नलक्षणत्वात्, रूपादिवदिति; न च हेत्वसिद्धिः, असतो ह्यात्मलाभः, सतः सत्ता-वियोगः, द्रव्यरूपत्वेनानुवृत्तिश्चोत्पादादेः परस्परमसंकीर्णानि लक्षणानि सकललोकसाक्षिकाण्येव । नचामी भिन्न-लक्षणा अप्यर्हन्ति परस्परानपेक्षा भवितुम्, गगना-रविन्दवदसत्त्वप्रसङ्गात् । इति सिद्धमुत्पादादिसंवलितं वस्तु ।

तथाचोक्तम्—

" घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् ।
शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ १ ॥
पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः ।
अगोरसव्रतो नोभे तस्माद् वस्तु त्र्यात्मकम्" ॥२॥ इति ।

पञ्चाशति च कविकुलपतितर्कोदधिश्रीरत्नप्रभसूरयः--

" प्रध्वस्ते कलशे शुशोच तनया मौलौ समुत्पादिते
पुत्रः प्रीतिमुवाह कामपि नृपः शिश्राय मध्यस्थताम् ।
पूर्वाकारपरिक्षयस्तदपराकारोदयस्तद्द्वया-
धारश्चैक इतिस्थितं त्रयमयं तत्त्वं तथाप्रत्ययात्॥१॥" इति

ननु " स्यान्नित्यो घटः " इत्यत्र द्रव्यरूपावच्छिन्ननि-त्यताशाली घटः इति बोधः । "स्यादनित्यो घटः" इत्यत्र पुनः पर्यायरूपावच्छिन्नानित्यत्ववान् घटः इति बोधः । अनित्यत्वं चात्र नित्यभेदः । न च द्रव्यरूपेण नित्ये वस्तुनि युक्तं नित्यभेदावस्थानम्, भेदस्य व्याप्यवृत्तितया स्वप्रतियोगिनि बाधात् इति चेत्, न, "मूले वृक्षः कपिसंयोगी न" इत्यबा-

धितप्रत्ययबलात् भेदस्याव्याप्यवृत्तिभावेन स्वीकारात् । अव्याप्यवृत्तित्वं च प्रकृते प्रतियोगिवृत्तित्वम्, संयोगिभेदस्य प्रतियोगी संयोगवान् वृक्षः तद्वृत्तित्वं मूलावच्छेदेन संयोगिभेदस्य विश्रुत एवेति । प्रकृतेऽप्येकत्रैव घटाद्यर्थे द्रव्यरूपावच्छेदेन नित्ये पर्यायावच्छेदेन नित्यभेदः सङ्गत एवेति ।

एतेन परैः प्रोद्भावयांबभूवानं दोषाष्टकं क्षीणदोषाष्टकशासने कुतः प्रवेष्टुं सावकाशम् ? । न हि प्रतीतिसिद्धे वस्तुनि कश्चित् विरोधः, स्वरूपेण सत्त्वस्य इतररूपेणासत्त्वस्य वस्तुनोऽनुभवसिद्धत्वं प्रागेवोपादर्शाम ॥ १ ॥

वैयधिकरण्यमपि चैकाधिकरणतया सत्त्वासत्त्वयोः प्रतीतेः परास्तमेव ॥ २ ॥

अनवस्थानमप्यप्रामाणिकपदार्थपरम्परापरिकल्पनाविरहेण अनन्तधर्मात्मनि वस्तुनि कुतः सञ्चरिष्णु ॥ ३ ॥

सर्वेषां युगपत् प्राप्तिः संकरः परस्परविषयगमनं व्यतिकरश्च तथाप्रसिद्धे वस्तुनि कुत आसजेताम् ? । ४ ।५ ।

तथा निर्णीतेऽर्थे च सन्देहोऽपि दग्ध एव । ६ ।

प्रतिपन्ने चार्थेऽप्रतिपत्तिरिति पुनः साहसिक्यमेव । ७ ।

तथाच सति विषयव्यवस्थानात् नाऽव्यवस्थापिशाचीसञ्चार इति । ८ ।

अपि च कः खलु नानेकान्तं कामयेत ? । कश्चानेकान्तमकान्तीकुर्वन् कान्तोऽवास्थित ? ।

तथाहि--

मेचकज्ञानमेकमनेकाकारमुपयन्तोऽनेकान्तं बौद्धा अपि सदकार्षुः । अयं भावः—मेचकं किल पञ्चवर्णात्मकं रत्नम् । तज्ज्ञानं नैकप्रतिभासात्मकमेव, इतरथा चित्रज्ञा-

नत्वव्याघातात् ; नीलपीतादिनानाकारज्ञानं हि चित्रज्ञानम् नत्वेकाकारज्ञानम् । न च मेचकज्ञानमनेकमेव युक्तं वक्तुम्, "मेचकज्ञानमिदम्" इत्यनुभूत्यनुपपत्तेः ।

यौगा अप्येकस्यैव पटादेश्चलाचलरक्तारक्ताऽऽवृतानावृतादिविरुद्धधर्मानुपलम्भसामर्थ्यात् सहमानाः स्याद्वादिषुः । द्रव्यत्वादि चानुवृत्तिव्यावृत्तिप्रत्ययगोचरत्वात् सामान्यविशेषः, द्रव्यं द्रव्यमित्यनुगतधीविषयत्वाद् हि सामान्यम्, गुणो न द्रव्यं कर्म न द्रव्यमिति व्यावृत्तिप्रत्ययविषयत्वात् च विशेषः एवं चैकस्य सामान्यविशेषात्मकत्वमुपागुः ।

साङ्ख्याश्च सत्त्वरजस्तमसां साम्यावस्थां प्रधानमभिदधिवांसो नोत्सहन्ते स्याद्वादं तिरस्कर्तुम् ।

चार्वाककुलमपि पृथ्व्यादिभूतचतुष्टयपरिणामं चैतन्यमाचक्षाणं न सममंस्त नानेकान्तम् । नह्येतत् चैतन्यं पृथ्व्याद्यपेक्षयातिरिक्तं शक्यमभ्युपगन्तुं चार्वाकैः, तत्त्वान्तरप्रसक्तेः । नापि पृथिव्याद्येकैकमेव तत्, घटादेरपि चेतनत्वापत्तेः । किन्तु पृथिव्याद्यनेकात्मकमेकं चैतन्यमिति न कश्चिद् वैमनस्यमशकत् स्याद्वादे धर्तुमिति ॥ १ ॥

अथ सप्तभङ्गीभेदावाह—

## सकल-विकलादेशाद् द्विविधा ॥ ८ ॥

'द्विविधा' इति स्त्रीनिर्देशादुक्तसूत्रतः सप्तभङ्गीपदपरामर्शः । सप्तभङ्गी द्विप्रकारा, सकलादेशरूपा, विकलादेशरूपा चेति ॥ ८ ॥

तत्र सकलादेशस्वरूपमुपदिशति---

**कालादिभिरभेदवृत्त्याऽभेदोपचारेण वा प्रमाणिताशेषधर्मात्मकमर्थं युगपद्-भिदधद् वाक्यं सकलादेशः ॥ ९ ॥**

कालादिभिरष्टाभिः कृत्वा या धर्मधर्मिणोरभेदवृत्तिः अपृथक्त्वं तया, तैः पृथग्भूयं भेजुषामपि धर्मधर्मिणामभेदोपचारेण वा प्रमाणगृहीतानन्तधर्मात्मकं वस्तु युगपत् एककालमभिदधत् प्रतिपादयत् वाक्यं सकलादेशः प्रमाणवाक्यमित्यर्थः। अयमभिप्रायः निःशेषधर्मात्मकं वस्तु कालादिभिरभेदवृत्तिप्राधान्यात् अभेदारोपेण वा युगपत् सकलादेशः प्रतिपादयति, तस्य प्रमाणाधीनत्वात्। विकलादेशस्तु क्रमेण भेदोपचारेण भेदवृत्तिप्राधान्याद् वा, तस्य नयायत्तत्वात्।

कः पुनः क्रमः ? किं वा यौगपद्यम् ? उच्यते यदा खल्वस्तित्वादिधर्माणां कालादिभिर्भेदविवक्षा तदैकशब्दस्यानेकार्थप्रत्यायने सामर्थ्यविरहात् क्रमः। यदा पुनस्तकेषामेव धर्माणां कालादिभिरभेदेन वृत्तमात्मरूपमुच्यते तदैकेनापि ध्वनिना एकधर्मप्रत्यायनमुखेन तदात्मकतामापेदानस्य सर्वधर्मस्वरूपस्य प्रतिपादनसम्भवाद् यौगपद्यम्।

के च कालादयः ? उच्यते काल आत्मरूपमर्थः सम्बन्धः उपकारो गुणिदेशः संसर्गः शब्द इत्यष्टौ। अयं च तच्छ्लोकः-

"कालात्मरूपसम्बन्धाः संसर्गोपक्रिये तथा।
गुणिदेशार्थशब्दाश्चेत्यष्टौ कालादयः स्मृताः" ॥१॥ इति

तत्र स्यादस्त्येव घट इत्यत्र यादृशकालावच्छेदेन घटादावस्त्यस्तित्वम्, तत्कालावच्छेदेन शेषानन्तधर्मा अपि घटे

वर्तन्ते इति । तेषामेककालावच्छिन्नैकाधिकरणनिरूपितवृत्तित्वं कालेनाभेदवृत्तिः । १ ।

यदेव चास्तित्वस्य घटगुणत्वं स्वरूपं तदेवेतरानन्तगुणानामपीत्यात्मरूपेणाभेदवृत्तिः । २ ।

य एव च घटद्रव्यरूपोऽर्थोऽस्तित्वस्याधारः स एवान्यधर्माणामपीत्येकाधारवृत्तित्वमर्थेनाभेदवृत्तिः । ३ ।

य एव चाविष्वग्भावः कथञ्चित्तादात्म्यरूपोऽस्तित्वस्य सम्बन्धः स एवाऽनन्तधर्माणामपीत्येकसम्बन्धप्रतियोगित्वं सम्बन्धेनाभेदवृत्तिः। ४ ।

य एव चोपकारोऽस्तित्वेन स्वानुरक्तत्वकरणं स एवान्यैरपीत्युपकारेणाभेदवृत्तिः । ५ ।

यद्देशावच्छेदेन घटादावस्तित्वमस्ति तद्देशावच्छेदेनैव नास्तित्वादिधर्मास्तत्र, न पुनः कण्ठावच्छेदेनास्तित्वम्, नास्तित्वं च पृष्ठावच्छेदेनेति देशभेदः इति गुणिदेशेनैकदेशावच्छिन्नवृत्तित्वमभेदवृत्तिः । ६ ।

य एव चैकवस्त्वात्मनाऽस्तित्वसंसर्गः स एवान्येषामिति संसर्गेणाभेदवृत्तिः । अत्र च कथञ्चित्तादात्म्ये अभेदः प्रधानम् , भेदो गौणः । संसर्गे तु भेदः प्रधानमभेदो गौणः इति । ७ ।

य एव चास्तीतिशब्दोऽस्तित्वधर्मात्मनो वस्तुनो वाचकः स एव शेषानन्तधर्मात्मकस्यापीति शब्देनाभेदवृत्तिः । ८ । एवंरीत्या कालादिभिरष्टविधाऽभेदप्रवृत्तिः पर्यायार्थिकनयस्य गुणभावे द्रव्यार्थिकनयप्राधान्यादुपपत्तिमती विज्ञेया । द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्ये तु नेयं गुणानामभेदवृत्तिरर्हति सम्भावितुम्, तथाहि—तत्र तावत् कालेनाभेदवृत्तिर्न

सम्भवति, समकालमेकत्र नानागुणानां परस्परविरुद्धानाम-सम्भवात्, प्रतिक्षणं वस्तुनो भेदात्। सम्भवे वा तदाश्रयस्य तावत्प्रकारेण भेदापत्तेः ॥ १ ॥

नाप्यात्मरूपेण, नानागुणानां सम्बन्धिन आत्मरूपस्य च भिन्नत्वात् इतरथाऽमीषां भेदव्याघातात्। २।

नाप्यर्थेन, स्वाश्रयार्थस्यापि नानात्वात्, अपरथा नाना-गुणाश्रयस्यैकत्वविरोधात्। ३।

नापि सम्बन्धेन, सम्बन्धस्य सम्बन्धिभेदेन भेदोप-लब्धेः। ४। नाप्युपकारेण, तैः क्रियमाणस्योपकारस्य प्रति-नियतरूपस्यानेकत्वात्; अनेकोपकारिभिः क्रियमाणस्योपकार स्यैकत्वविरोधात्। ५।

नापि गुणिदेशेन, गुणिदेशस्यापि प्रतिगुणं भेदात्-तदभेदे भिन्नार्थगुणानामपि गुणिदेशाभेदप्रसक्तेः। ६।

नापि संसर्गेण, संसर्गस्य संसर्गिभेदेन भेदात् तदभेदे संसर्गिभेदविरोधात्। ७।

नापि शब्देन, शब्दस्यार्थभेदेन भिन्नत्वात्, सर्वगुणानामेक-शब्दवाच्यत्वे सर्वार्थानामेकशब्दवाच्यत्वापत्तेः। ८। एवं तत्त्वतोऽस्तित्वादीनामेकत्रार्थेऽभेदवृत्तेरसम्भवे कालादिभि-र्भिन्नात्मनामभेदोपचारः क्रियते। तदेवं निरूपिताभ्यामभेद-वृत्त्यभेदाध्यारोपाभ्यां प्रमाणसिद्धानन्तधर्मात्मकस्य वस्तुनः समसमयमभिधायकं वचः सकलादेशः प्रमाणवाक्यापरपर्याय इति व्यवस्थितम् ॥ ९ ॥

विकलादेशं निर्दिशति—

विपरीतो विकलादेशः ॥ १० ॥

नयविषयीकृतवस्तुधर्मस्य भेदवृत्तिप्राधान्येन भेदव्यपदेशेन वा क्रमेणाभिधायि वचनं विकलादेशः । यथा खलु सकलादेशस्वभावं प्रमाणवाक्यं स्वविषये प्रवर्त्तमानं विधिप्रतिषेधाभ्यां सप्तभङ्गीमनुगन्तृ, तथैव विकलादेशस्वभावं नयवाक्यमपि द्रष्टव्यम् । प्रमाणसप्तभङ्गीवच्चैतस्य विचारः करणीयः, नयसप्तभङ्गीष्वपि प्रतिभङ्गं स्यात्कारस्य एवकारस्य च प्रयोगसद्भावात् ; तासां विकलादेशभावादेव सकलादेशरूपायाः प्रमाणसप्तभङ्ग्या विशेषव्यवस्थापनात् । विकलादेशस्वभावा हि नयसप्तभङ्गी, वस्त्वंशमात्रप्ररूपकत्वात् । सकलादेशस्वभावा तु प्रमाणसप्तभङ्गी सम्पूर्णवस्तुप्ररूपकत्वादिति ।

प्रमाणवच्च नयस्य फलमभ्यूहनीयम् । नवरमिह वस्त्वेकदेशश्चेतसि निधानीय इति ।

तथाचालौकिकीयं रत्नप्रभसुवर्णावली—

" या प्रश्नाद् विधिपर्युदासभिदया बाधच्युता सप्तधा
धर्मं धर्ममपेक्ष्य वाक्यरचनाऽनेकात्मके वस्तुनि ।
निर्दोषा निरदेशि देव ! भवता सा सप्तभङ्गीं यया
जल्पन् जल्परणाङ्गणे विजयते वादी विपक्षं क्षणात्" ॥ १ ॥

सम्मतिपर्यवसाने च—

"जेण विणा लोगस्स वि ववहारो सव्वहा न निव्वडई ।
तस्स भुवणेक्कगुरुणो णमो अणेगंतवायस्स" ॥१॥ इति ॥१०॥

इत्याचार्यश्रीविजयधर्मसूरीश्वरविहितायाः प्रमाणपरिभाषाया वृत्तिभूते मुनिश्रीन्यायविजयप्रणीते न्यायालङ्कारे आगमनयसप्तभङ्गीस्वरूपचर्चाचतुरश्चतुर्थः परिच्छेदः ॥ ४ ॥

अर्हम् ।

# पञ्चमः परिच्छेदः ।

## चेतनो जीवः प्रमाता ॥ १ ॥

चैतन्यं जीवस्य लक्षणम् । यदूचे-"चेतनालक्षणो" जीवः इति।

ये तु देहाकारपरिणतभूतान्येव चैतन्याश्रयत्वेनाभ्युपजग्मुः, ते महामूर्खाः, कथमन्यथा देहाकारपरिणतभूतात्मनि शवे प्रत्यक्षप्रसिद्धचैतन्याभावं नावलोकेरन् । न चैवमालुलुकानास्तथाभूताभ्युपगमाऽसद्ग्रहेणात्मानमर्हन्ति कदर्थयितुम् । न च पृथिव्यप्तेजोवायुलक्षणभूतचतुष्कसमुदयोदयत्वेन चैतन्यस्यातथाभूते मृतदेहसमुपपत्तेस्तदभावस्य कुतस्तदभ्युपगमाऽसद्ग्रह इति शक्यं वक्तुम्, वक्तव्यं हि तत्र केन भूतेन वैकल्यम्? वायुनेति चेत्, मैवम्, तत्सम्भवेपि चैतन्यानुपलब्धेः । अपिच दुरुपपादः कायाकारपरिणामः, स हि पृथिव्यादिभूतमात्रनिबन्धनो यदि तदा सर्वत्र तत्प्रसङ्गः तथाविधसाम्यादिभावसहकारिकारणविकलत्वान्नैष दोष इति चेत् साम्यादिभावस्यापि पृथिव्यादिभूतनिबन्धनत्वे सर्वत्र तत्प्रसङ्गात् तत्प्रसङ्गेन तत्प्रसङ्गः वस्त्वन्तरनिमित्तत्वे च तत्त्वान्तरापातः ! अथ च वस्त्वन्तरानिमित्तोऽसौ, प्राप्तस्तर्हि वस्त्वन्तरपदार्थो जीवपदार्थः । अपिच प्रत्यक्ष एव जीवः, तथाहि—यदेतत् संशयादिज्ञानं स्वसंवेदनसिद्धं हृदि परिस्फुरति स एव जीवः; संशयादिज्ञानस्यैव तदनन्यत्वेन जीवत्वात् । यच्च प्रत्यक्षं तन्न प्रमाणान्तरेण साध्यम्, यथा स्वशरीर एवात्मसंवेदनसिद्धाः सुखदुःखादयः । ननु

प्रत्यक्षमपि सरलसालरसालप्रियालहिन्तालतालतमालप्रवाल-कीलालजम्बालप्रभृति वस्तुजातं शून्यवादिनं प्रति भवत्येव प्रसाधनीयमिति चेत्, नैवम् " निरालम्बनाः सर्वे प्रत्ययाः " प्रत्ययत्वात् स्वाप्निकप्रत्ययवत् " इत्यादेस्तदुद्भावितबाधक-प्रमाणस्यैव तत्र निराकारात् । प्रकृते त्वात्मग्राहिणि प्रत्यक्षे बाधकप्रमाणाभावात् । किं च कृतवानहम्, करोम्यहम्, करिष्याम्यहम्, "उक्तवानहम्" "ब्रवीम्यहम्" "वक्ष्याम्यहम्" ज्ञातवानहम्, जानेऽहम्, ज्ञास्याम्यहम्, इत्यादिप्रकारेण योऽयं त्रैकालिकः कार्य्यव्यपदेशः तद्विषयप्रयुज्यमानतया तत्समुद्भूतो योऽयमहंप्रत्ययः एतस्मादपि प्रत्यक्ष एवात्मा । न खल्वयमहंप्रत्ययः आनुमानिकः अलैङ्गिकत्वात्, नाप्यागमा-दिप्रमाणसम्भवः, तदनभिज्ञानां बालगोपालादीनामप्यन्त-र्मुखतयाऽऽत्मग्राहकत्वेन स्वसंविदितस्य तस्य समुद्भूतेः प्रत्यक्ष एव च गुणी जीवः, स्मृतिजिज्ञासाचिकीर्षा-जिगमिषासंशयादितद्गुणानां स्वसंवेदनप्रत्यक्षसिद्धत्वात् इह हि यस्य गुणाः प्रत्यक्षाः स प्रत्यक्ष एवेत्यकलङ्को नियमः । प्रत्यक्षगुणश्चायं जीवः तस्मात् प्रत्यक्षः । ननु कोऽत्र नियमे दृष्टान्तः ?, स्पष्ट एव घटः, प्रत्यक्षरूपादिगुणो हि घटः प्रत्यक्ष एव । न च प्रत्यक्षशब्दगुणकमाकाशमप्रत्यक्षमित्यभिदधुषा शक्यः कलङ्कयितुमसौ नियमः, आकाशस्य शब्दगुणाश्रयत्वा-भावात्; एतच्च तत्त्वं प्रागुक्तमेव । न च भवतामपि ज्ञानादि-गुणानां गुणी देह एवेति सम्यक्, देहस्य हि मूर्त्तिमत्त्वेन चाक्षुषत्वेन वाऽतथाभूता ज्ञानादिगुणा घटवत्तस्य न सङ्गच्छन्ते । न खल्वस्ति द्रव्यरहितो गुणः, ततो यो ज्ञानादिगुणा-नामनुरूपोऽमूर्त्तः अचाक्षुषश्च गुणी, स देहातिरिक्त आत्मा

वेदितव्यः । देहधर्मत्वे च ज्ञानादीनां मृतदेहेऽपि तदुपलम्भप्रसङ्गः इत्युक्तमेव । न च लावण्यादिवदुपपत्तिः तेषां मृतदेहेऽपि सत्त्वात् । इतरथा तस्य तन्मात्राहेतुकत्वेन चैतन्यवद्देवातिरिक्तहेत्वपेक्षणेऽनायासादात्मसिद्धेः । न च तदानीं प्राणाभावात्तदभावः, नलिकादिना वायुसञ्चारेऽपि चैतन्यानुपलब्धेः । किञ्च देहस्य चेतनत्वे प्रतिदिनमन्यान्यभावे तस्य पूर्वदिनानुभूतस्योत्तरदिने स्मरणं न स्यात् अन्यदृष्टस्यान्येन स्मरणाभावात् अन्यथातिप्रसङ्गात् । एकचैतन्यसन्ताने वासनाफलयोरुपपत्तेर्न दोष इत्यप्यपरिष्कृताभिधानम्, आद्यसुतचैतन्यस्य चैतन्यानुपादानत्वात् । मातृचैतन्यं तदुपादानमितिचेत् ?, तर्हि मात्रनुभूतस्य भ्रूणेन स्मरणानुषङ्गः, मातृचैतन्यसंसर्गस्य चैतन्योत्पादकत्वे तु तत्संलग्नघटादावपि तदनुत्पादे का प्रत्याशा ?; स्वेदजादिषु च मात्रभावेन दुरुपपादस्तदुत्पादः, तस्मात् यदेकं चैतन्योपादानं स एवात्मा । अथ यथा वृश्चिकस्य गोमयवृश्चिकप्रभवत्वं तथा ज्ञानस्याभ्यासरसायनमातापितृशुक्रशोणितादिनानाहेतुप्रभवत्वमुपपद्यत एवेति चेद् न, रसायनादिस्थलेऽपि समानजातीयपूर्वाभ्याससम्भवात्, इतरथाहि समानेऽपि रसायनाद्युपयोगे यमजयोः प्रज्ञामेधादिविशेषो दुरुपपादः, तस्मात् प्रज्ञादीनां जन्मादौ न विशेषः, शालूकगोमयजन्ययोस्तु शालूकयोर्मिथो विशेषदर्शनादेव विचित्रहेतुप्रभवत्वमिति न किञ्चिदनुपपन्नम् । यत्तु शरीरवृद्ध्या चैतन्यवृद्धेः चैतन्यं शरीरोपादानमिति मतं, तदसारम्, महादेहस्यापि गजाऽजगरादेरल्पचेतनत्वात् । शरीरविकाराच्चैतन्यविकारोपलम्भात् तस्य तद्धर्मत्वमप्यनादरणीयम्, सात्त्विकानामन्यगतचित्तानां वा शरीरच्छेदेऽपि चैतन्यविकारानुपलब्धेः,

सहकारिविशेषादपि कार्यविशेषानुभवाच्च । करचरणादियाव-दवयवोपादेयत्वे च चैतन्यस्य कराद्यपगमे तदपगमप्रसङ्गावतारः, यत्किञ्चिदाश्रयापगमेऽपि सत्या बहुत्वसङ्ख्याया इव तस्यापि तावदाश्रयनाशनाश्यत्वाङ्गीकारे तु मृतकायेऽपि तदनाशा-नुषङ्गः । एतेन करचरणाद्यवयवेषु प्रत्येकमेव चैतन्यं विश्राम्यतीत्यप्यालापस्तिरस्कृत एव, एकत्वावमर्शवि-लोपापत्तेश्च स्यान्मतिरेषा घटीयपाकजरूपादीनामिव देह-धर्माणामपि ज्ञानादीनां निमित्तापगमापगम्यत्वाद् नानुप-पादलेशः इति, तत्रापि सुहृद्भावेनानुयुक्तैर्वक्तव्यमभियुक्तैः किं तन्निमित्तं यद्विपादात् ज्ञानादिविपादः ? । यदि च प्राणः, नैतत्, तत्सत्त्वेऽपि हि विपद्यन्ते सुषुप्तौ ज्ञानादयः यदि च यद्विरहात्तदा न ज्ञानाद्युदयः तदेव तादृशं तन्निमि-त्तमनुगतमित्याशयः, न तर्ह्येष कदाशयः, तादृशस्योपयोगस्यैव सद्भावेन सर्ववादिप्रसिद्ध निर्बाधात्मपदार्थसिद्धान्तानुपा-तित्वात् । घटमहं जानामीत्यादिप्रत्ययश्चात्मग्राहकत्वेन प्रत्यक्षरूपतयोक्तप्रायः, अत्र हि कर्त्तृतयाऽऽत्मनः कर्मभावेन घटादिविषयस्य क्रियात्वेन ज्ञानस्य भानं सर्वानुभवारूढम् । न च शरीरस्यैवात्र ज्ञातृतया प्रतिभासः शक्यो वदितुम्, ज्ञातु-र्बहिरिन्द्रियसन्निकर्षनियम्यविषयताविशेषानाश्रयत्वात्, देहस्य चातथाभूतत्वात्, अपरथा प्रचुरतरतिमिरनिकरपारि-कारितापवरकोदरशरीराप्रतिसन्धौ "अहम्" इति प्रतिसन्धा-नानुपपत्तेः । ननु "ज्ञानकर्मतया घटादिवद् देहस्य न ज्ञातृत्वमिति प्रोचान सम्मतिटीकाकृता भगवता श्रीअभय-देवसूरिमिश्रेण कथं सङ्गतिं गाते ?, ज्ञानकर्मत्वेन घटादेरिव शरीरस्य ज्ञातृत्वप्रतिषेधे हि प्रतिषिद्ध एव स्यादात्मन्यपि

तद्भावः तस्यापि ज्ञानकर्मत्वेन " मामहं जानामि " इत्यादौ प्रतिभानात् इति चेत् ?

अत्राहुस्तार्किकचक्रचक्रिणः पूज्यपादाः श्रीयशोविजय-गुरवः—

तत्र कर्मपदस्य स्वकर्मत्वानुपरक्तज्ञानाविषयत्वपरत्वेनात्मनि न कश्चिद् दोषः । ननु " कृशोऽहं, गौरोऽहं, स्थूलोऽहम्, इत्यादिप्रतीत्या देहधर्मैः सममहङ्कारस्य सामानाधिकरण्यग्रहात् देहस्यैव अहंप्रत्ययाविषयत्वं युज्यते इति चेत्तदप्यरमणीयम्, सुख्यहं दुःख्यहमित्यादिप्रत्ययेनाहन्त्वस्य सुखादिसामानाधिकरण्यावगमात् । न चास्य भ्रमत्वमुद्घोषणीयम्, बाधकाभवात् । न चोक्तायाः कृशोहमित्यादिनिर्बाधप्रतीतेः प्रत्यक्ष एव देहोऽहंप्रत्ययविषयत्वेन युक्तोऽङ्गीकर्तुमिति सुन्दरालापः, शरीरे खल्विदंत्वप्रतीतेर्बाधिकायाः सद्भावेन अहमितिप्रतीतेर्भ्रमत्वात्, कृशोहमित्यादिषु पुनरहमितिपदं मदुपकारित्वार्थेन भावनीयम्, भवति खलु लोके स्वकार्यकारिणि " योऽयं सोऽहम् " इति व्यवहारः । ममायमात्मेति तु न प्रत्ययः, केवलं याहाच्छिकशब्दमात्रमेव । न च शरीरेपि ममेदमिति शब्दमात्रमेवेति वाच्यम्, इदमित्याकारकविषयतायाश्चाक्षुषादिव्यापारनियम्यायाः शरीरचाक्षुषादावबाधात् । प्रयोगाश्च, जीवच्छरीरं प्रयत्नवताधिष्ठितम् इच्छानुविधायिक्रियावत्त्वात् रथवत् ॥ १ ॥

श्रोत्रादीनि उपलब्धिसाधनानि कर्तृप्रयोज्यानि करणत्वात् वास्यादिवत् ॥ २ ॥

अस्ति देहस्य विधाता आदिमत्प्रतिनियताकारत्वात् कुम्भवत् ॥ ३ ॥

अस्तीन्द्रियाणामधिष्ठाता करणत्वात्, सर्वदण्डादिकरणानि हि सकर्तृकाण्येव कार्यमर्जयितुं पर्याप्नुवन्ति ॥ ४ ॥

देहोऽयं सभोक्तृकः भोग्यत्वात् शाल्यादि-वस्त्रादि-गृहादि-गजादिवत् ॥ ५ ॥

ज्ञानादयो द्रव्याश्रयाः गुणत्वात् रूपादिवत् ॥ ६ ॥

ज्ञानादयः सोपादानाः कार्यत्वात् कलशवत् ॥ ७ ॥

जीव इति वचनं सार्थकं व्युत्पत्तिमत्त्वे सति शुद्धपदत्वात्, यन्नैवं तन्नैवं यथा डित्थादिकं खरविषाणादिकं च, अत्र ह्याद्यं शुद्धपदमपि व्युत्पत्तिराहित्यादसार्थकम् । चरमं च सामासिकत्वेन शुद्धपदत्वाभावाद् व्युत्पत्तिमदपि न सार्थकम् ॥८॥

देहो न जीवपदार्थः देहजीवयोः पर्यायवचनभेदात्, यत्र हि दृष्टः पर्यायवचनभेदः तत्रास्त्येवान्यत्वम्, यथा घटाकाशयोः, तत्र हि कुटकुम्भकलशादयो घटस्य पर्यायाः, खनभोव्योमाम्बरगगनाऽन्तरिक्षाऽमरपथादयस्त्वाकाशपर्यायाः। प्रकृते च जीवो जन्तुरसुमान् प्राणी सत्त्वो भूत इत्यादयो जीवपर्यायाः, शरीरं वपुर्देहः कायो भूघनं कलेवरमिन्द्रियालय इत्यादयो देहपर्यायाः । पर्यायवचनभेदेपि च वस्त्वभेदे सर्वाभेदप्रसङ्गो दुरुद्धरः ॥ ९ ॥

प्रतिपक्षवानयमजीवः व्युत्पत्तिमच्छुद्धपदप्रतिषेधात्, यथाऽघटो घटप्रतिपक्षवान् तथाभूतः, यः पुनर्नेदृशः, नासावित्थम्भूतः, यथा अखरविषाणम्, अडित्थश्चेति, न ह्यस्त्यत्र प्रतिपक्षः नास्ति चाद्ये शुद्धपदत्वशून्ये हेतुसम्पर्कः, द्वितीयेऽपि व्युत्पत्तिमत्त्वाभाववति तथैव ॥ १० ॥

नास्ति जीव इत्येष आत्मप्रतिषेधध्वनिः जीवास्तित्वनान्तरीयक एव निषेधशब्दत्वात्, यथा नास्त्यत्र घट इति

शब्दोऽन्यत्र घटसद्भावाऽविनाभाव्येव, भवति हि निषिध्यमानोऽर्थो नियमेन क्वचित्, इतरथा निषेधायोगात्, न ह्यत्यन्तमसतां युक्तिमान् व्यासेधः, यथा खरविषाणकल्पानां भूतपञ्चकार्थान्तरभूतानाम्, इति निषिध्यमानत्वमेव जीवस्य सत्त्वमवगमयति घटाद्यवच्छेदेन निषिध्यमानो जीवः शरीरावच्छेदेन सन्नेव । ननु घटाद्यवच्छेदेनाप्यसौ सन्नेवेति चेत् कथं सत्त्वम् ?; व्यापकत्वादिति चेत्ः किं तत्र प्रमाणम् ?; विपक्षे तु अस्त्येव प्रमाणम्, यदवादीत्—

" यत्रैव यो दृष्टगुणस्तत्र कुम्भादिवन्निष्प्रतिपक्षमेतत् " इति । एतच्च वक्ष्यामः । ननु व्यापकत्वेनाभिमतमप्याकाशं कुत्र निषिध्यमानं सत् सत्तामनुविशेत् ? । नन्वेतत् क आह सर्वेण सदर्थेन निषिध्यमानेन भवनीयमिति ?, निषिध्यमानः सर्वोऽर्थः सन्नेवेति त्ववोचाम । व्याप्यसद्भावे हि व्यापकेन भवितव्यम् । अन्यथा तयोरविनाभावनियमभङ्गप्रसङ्गात् व्यापकं तु क्वचिद् व्याप्यव्यभिचार्यपि स्यादेव, यथा तप्तायोगोलकेऽनलो धूमविरहितः । उक्तं च—"लिङ्गे लिङ्गी भवत्येवइत्यादि । प्रकृतेपि निषिध्यमानत्वं व्याप्यं सद्भूतभावाव्यभिचारि । न चैतद् दृष्टमिष्टं वा यो हि निषिध्यमानो नात्यन्तं भवत्येव, यदि च सद्भूतभावो निषिध्यमानत्वेन व्याप्यभावमभिदधीत स्यात्तदापूर्वोक्तः पर्यनुयोगः । नै वाऽश्रोषीराकाशस्यापि परमाणुषु विरहम्, इति यत्किञ्चिदेतत् । ननु खरविषाणादेरपि प्रतिषेधपथमवतरतः सद्भूतभावानुषङ्गः । न, न हि विशिष्टरूपेण तस्य प्रतिषिद्धता उपलब्धचरी खरे विषाणप्रतिषेधस्तु स्वप्रतियोगिनं गमयत्येव गवादौ । तदुक्त महाभाष्यकृता "असओ नत्थि निसेहो संजोगाइपडिसेहओ सिद्धं ।

संजोगाइ चउक्कं पि सिद्धमत्थंतरे नियमं" ॥ १ ॥ ॥ ११ ॥

तथास्ति जीवः कायेन्द्रियव्यतिरिक्तः तदुपरमेपि तदुपलब्धार्थानुस्मरणात् पञ्चवातायनोपलब्धार्थानुस्मर्तृचैत्रवत् ॥ १२॥

अन्याविज्ञानपूर्वकमिदं बालविज्ञानं विज्ञानत्वात् बाळविज्ञानपूर्वकयुवविज्ञानवत्, यद्विज्ञानपूर्वकं चेदं बालविज्ञानं तच्छरीरादन्यदेव पूर्वशरीरपरित्यागपीहत्यज्ञानकारणत्वात्, तस्य च विज्ञानस्य गुणत्वेन गुणिनमन्तरेणानुपपत्तेस्तच्छरीरव्यतिरिक्तात्मनः सिद्धिः ॥ १३ ॥

आदिमः स्तनाभिलाषो बालस्यायमन्याभिलाषपूर्वक अनुभवात्मकत्वात् अभिलाषत्वाद्वा साम्प्रतमभिलाषवत्; यदभिलाषपूर्वकश्चायमाद्यः स्तनाभिलापः स शरीरादन्य एव पूर्वशरीरपरित्यागेपीहत्याभिलापकारणत्वात्; ततोऽस्याप्याश्रयः इतरबाधेनात्मा सिद्धिमारोहति ॥ १४ ॥

बालशरीरं शरीरान्तरपूर्वकमिन्द्रियादिमत्त्वात्, बालशरीरपूर्वकयुवशरीरवत् यत्पूर्वकं चेदं बालशरीरं तदस्माच्छरीरादर्थान्तरं तदत्ययेपीहत्यशरीरोपादानात्, यस्य चैतच्छरीरं स भवान्तरगामी शरीरादर्थान्तरभूतो देहवानात्मा ॥ १५ ॥

अन्यसुखपूर्वकमिदमाद्यं बालसुखं सुखत्वात् साम्प्रतंसुखवत् यत्सुखपूर्वकं चेदमाद्यं बालसुखं तच्छरीरादन्यदेव, तदत्ययेपीहत्यसुखकारणत्वात्, गुणश्चायम्, न चासौ गुणिनमन्तरेणाऽवस्थास्नुः, अत स्तस्याश्रयो गुणी स देहादर्थान्तरमात्मा । एवं दुःखरागद्वेषभयशोकादयोऽपि योजनीयाः ॥ १६ ॥

इन्द्रियेभ्यो भिन्नस्यैव कस्यापीयं घटादिज्ञानलक्षणा मतिः, अन्धत्वबाधिर्याद्यवस्थायामिन्द्रियव्यापाराभावेपि तद्-

द्वारेणोपलब्धार्थानुस्मरणात्, इह यो यदुपरमेपि यैरुपलब्धा-
न् नर्थानानुस्मर्त्ता स तेभ्यो भिन्न एव प्रतीतः, यथा गवाक्षैरुपल-
ब्धानामर्थानां तदुपरमेपि स्मर्त्ता तद्भिन्नः, अनुस्मरति चायमा-
त्मावाधिर्य्याद्यवस्थायामपि हृषीकोपलब्धानर्थान्, अतः स
तेभ्योऽर्थान्तरम् ॥ १७ ॥

इन्द्रियेभ्यो व्यतिरिक्तो जीवः तद्व्यापारेप्यर्थानुपलब्धेः,
इह यो यद्व्यापारेपि यैरुपलभ्यानर्थान् नोपलभते स तेभ्यो भिन्नः
प्रतीतः, यथाऽस्थगितगवाक्षोप्यन्यमनस्कतयाऽनुपयुक्तोऽनव-
लोकमानस्तेभ्यो देवदत्तः ॥१८ ॥

समस्तीन्द्रियेभ्यः समधिक आत्मा, अन्येनोपलभ्यान्येन
विकारग्रहणात्, इह योऽन्येनोपलभ्यान्येन विकारं प्रतिपद्यते
स ततो व्यतिरिक्तः, यथा प्रवरप्रासादोपरीतस्ततः पदपरिपाटीं
कुर्वाणः पूर्ववातायनेन रमणीमालोक्यापरवातायनेन समागता-
यास्तस्याः करादिना स्तनस्पर्शादिविकारमुपदर्शयन्मैत्रः,
तथा चायमात्मा नेत्रेणाम्लीकामश्नन्तमवेक्ष्य रसनेन हृल्लास-
लालास्रावादिविकारं प्रतिपद्यते, ततस्तयोरर्थान्तर-
मात्मा ॥ १९ ॥

इन्द्रियातिरिक्तो जीवः अन्येनोपलभ्यान्येन ग्रहणात् इह
य आदेयं घटादिकमर्थमन्येनोपलभ्यान्येन गृह्णाति स तद्भिन्न
एव न्यभालि, यथा पूर्ववातायनेन घटादिकमुपलभ्यापरवा-
तायनेन गृह्णानस्ताभ्यां देवदत्तः गृह्णाति च चक्षुषोपलब्ध-
मर्थं घटादिकं करादिना जीवस्ततस्ताभ्यां भिन्न एव, इन्द्रियाणां
हि चैतन्यस्वीकारे एकेनोपलब्धार्थस्यान्येन स्मरणप्रसङ्गः
न चैष दृष्ट इष्टो वा चैत्रोपलब्धार्थानुस्मरणस्य मैत्रेऽभावात् इन-
रथा तत्र तत्प्रसङ्गात् : तदुवाच न्यायभाष्यकारः—"दर्शन

स्पर्शनाभ्यामेकार्थग्रहणात्, इति ॥२० ॥

ईश्वर-दरिद्र सेव्य-सेवक दुःखि-सुखि-भावादिविचित्ररूपाक्रान्तं जगद्लौकिकधर्मव्यतिरेकेणानुपपद्यमानं तदाक्षेपद्वारेण तदाभिमसृष्टतया आत्मानमवसाययतीत्यादिका नैके न्यायप्रयोगा युक्तयश्च यथोहमवसेयाः, विस्तरभिया तु विरम्यते ॥

"जडस्वरूपो जीवो ज्ञानसमवायाद् ज्ञानी" इति नैयायिकाः, तदवद्यम्, अनुपयोगस्वभावो जीवो नाऽर्थपरिच्छेदधुराधौरेयः, स्वयमचेतनत्वात्, गगनवत्, इत्यनुमानेन तदभ्युपगमप्रतिक्षेपात् । न च चेतनासमवायाद् नानुपपन्नस्तस्य परिच्छेद इत्युपपन्न आलापः, समवायस्य नित्यस्यैकस्य व्यापिनः सर्वत्राविशेषात् गगनादावपि तदापत्तेः । कश्च तेषां चैतन्यस्वरूपाभ्युपगमे तस्य कुक्षिव्यथोदयः ?, इति न जानीमः; जानीम एव वा तत्र मिथ्यात्वप्रबलोदयः, भवति हि तन्निबन्धना भूयसी नानामतव्यस्था । कथमन्यथा "व्योमादयो ज्ञानमस्मास्विति प्रतियन्तु स्वयमचेतनत्वात्, आत्मवत्, आत्मानो वा मैवं प्रतियुस्तत एव व्योमादिवत्" इत्यनुमानप्रयोगोद्दामकुद्दालं स्वाभिमतमतवटभङ्गानुषङ्गसुन्दरं नावलोकेरन् ? । अत्रत्यं तत्त्वमवितन्वाना अन्यत एव तत्परिचयं सूचयामः ॥

यत्तु बुद्ध्याधिकरणं द्रव्यं विभु नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वात् नभोवत्, इति प्रयोगेण वैभवमूशानं यौगैस्तदयोग्यमेव, प्रत्यक्षविरोधात्, प्रत्यक्षेण ह्यात्मा सुख्यहं दुःख्यहं घटादिकमहं वेद्मि इति अहमहमिकया स्वदेह एव सुखादिस्वभावतया प्रतीयते न देहान्तरे परसम्बन्धिनि, नाप्यन्तराले, अन्यथा हि सर्वस्य सर्वत्र तथाप्रतीतेः सर्वदर्शित्वं भोजनादिव्यवहारसङ्करश्च स्यात् । अनुमानविरोधाच्च;

तथाहि नात्मा परममहापरिमाणाधारः, द्रव्यान्तरासाधारणसामान्यवत्त्वे सति अनेकत्वात्, कुम्भवत् तथा नात्मा तत्परिमाणाधारः दिक्कालाऽऽकाशान्यत्वे सति द्रव्यत्वात् घटवत्, इत्यादि। शब्दगुणत्वप्रतिषेधेन दृष्टान्तस्य साधनवैकल्याच्च।

नन्वेवं शरीरपरिमाणभेदेनात्मपरिमाणभेदात् आत्मभेदापत्तिः परिमाणभेदे द्रव्यभेदनियमात् इति चेत्? न, एकत्र घटे श्यामरक्तादिरूपभेदेपि घटाभेदवत् परिमाणभेदेपि आत्माऽभेदोपपत्तेः, विशिष्टभेदस्य शुद्धद्रव्याभेदापरिपन्थित्वात्।

यच्चाहुः—"सर्वगत आत्मा द्रव्यत्वे सत्यमूर्तत्वात् गगनवत्, इति, तदप्यसारम्, यतोऽमूर्त्तत्वं मूर्त्तत्वाभावः, तत्र किमिदं मूर्त्तत्वं नाम यत्प्रतिषेधोऽमूर्तत्वं स्यात्?; रूपादिमत्त्वं चेत् मनसा व्यभिचारः, तस्य द्रव्यस्य तथाविधमूर्त्तत्वविरहेपि सर्वगतत्वविरहात्। असर्वगतद्रव्यपरिमाणं चेत् किमसर्वगतद्रव्यं यत्परिमाणं मूर्तिर्वर्ण्यते?; घटादिकमिति चेत् कुतस्तत्तथा?, तथोपलम्भात् चेत्, किं पुनरसौ भवतः प्रमाणम्? एवमिति चेत् तद्वदात्मनोपि स एवासर्वगतत्वं प्रसाधयतीति मूर्त्तत्वादसिद्धममूर्त्तत्वम्। तदसाधने न प्रमाणम्। "लक्षणयुक्ते बाधासम्भवे तल्लक्षणमेव दूषितं स्यात्" इति न्यायात्। तथाचातो घटादावप्यसर्वगतत्वमतिदुर्लभम्, शक्यते हि वक्तुं घटादयः सर्वगताः द्रव्यत्वे सत्यमूर्त्तत्वात् अन्तरिक्षवदिति। पक्षस्य प्रत्यक्षबाधो हेतोश्चासिद्धिरुभयत्राप्यविशिष्टा। ननु चात्मनः सर्वगतत्वात् तत्रास्त्यमूर्त्तत्वमसर्वगतद्रव्यपरिमाणसम्बन्धाभावलक्षणम्, न घटादौ विपर्ययात् इति। ननु चास्य-

सर्वगतत्वं कुतः सिद्धम् साधनान्तराद् अत एव वा ? आद्ये वैयर्थ्यं द्रव्यत्वे सत्यमूर्त्तत्वादित्यस्य । अत एव चेत् ?, परस्पराश्रयावतारः ।

न च प्रतिनियतपरिमाणवत आत्मनो मूर्तशरीरानुप्रवेशेनात्मनो मूर्त्तत्वानुषङ्गः, यतः किमिदं मूर्त्तत्वम् ?, इयत्तावच्छिन्नपरिमाणयोगो वा, रूपादिसन्निवेशो वा ?, आद्ये इष्टापत्तिः, अविभुद्रव्यस्य मूर्तत्वे सर्ववादिनामवैमतात् । न द्वितीयः, मनसो मूर्तानुप्रविष्टस्य रूपादिमत्त्वविरहेण व्यभिचारात् । न च मूर्तमहत्त्वेनापि तत्प्रतिबन्धः, अप्रयोजकत्वात् । एवमात्मनो मूर्तद्रव्यत्वेऽचेतनत्वापत्तिरपास्ता, सहचारदर्शनमात्रेण व्याप्त्यसिद्धेः, अन्यथा विभुत्वेपि गगनवत्तथात्वानुषक्तेरित्यलमधिकेन ।

तथा "कूटस्थनित्य आत्मा" इति दर्शनमप्यसमञ्जसम्, यतो यथाविधः पूर्वदशायामात्मा, तथाविध एव यदि ज्ञानोत्पादसमये स्यात् स्यात्तदा कथं प्रागिवासौ पदार्थपरिच्छेदकः ?; प्रतिनियतस्वरूपाप्रच्युतिरूपत्वात् कौटस्थ्यस्य । पदार्थपरिच्छेदे तु प्रागप्रमातुः प्रमातृरूपतया परिणामात् कुतः कौटस्थ्यावस्था ?; एवं कर्ता साक्षाद्भोक्ताप्यसौ वेदितव्यः, द्रष्टुः कर्तृत्वे मुक्तस्यापि तत्प्रसङ्ग इति चेद् ? । न, मुक्तस्यापि कर्तृत्वेनेष्टत्वात्, ननु विषयसुखादेरकर्तेति चेत्; कुतः स तथा ?, तत्कारणकर्मकर्त्तृत्वाभावादिति चेत् ?, तर्हि संसारी तत्कर्तृत्वात् विषयसुखादेः कर्ता स एव चानुभविता कथं न स्यात् ? । कथं चानः "अकर्ता निर्गुणो भोक्ता" इति प्रलापः शोभेत ? । भवति च यत्र स्वकर्मफलभोक्तृत्वं तत्र कर्तृत्वं, यथा कृषीवलः; एवमात्मापि तथैव न्यायसहः । अपिच सांख्यमताभिमत आत्मा

वस्तु न भवति अकर्तृत्वात्, गगनकुसुमवत् । किञ्चात्मा भोक्ता यद्यभिप्रेतस्तर्हि वक्तव्यं भुजिक्रियामसौ करोति न वा ?; आद्ये किमपराद्धं तदन्यक्रियाभिः; द्वितीये स्ववचनविरोधः, प्रयोगस्तु, संसार्यात्मा न भवति भोक्ता, अकर्तृत्वात्, मुक्तात्मवत्, अकर्तृभोक्तृत्वाङ्गीकारे च कृतनाशाऽकृताभ्यागमादिदोषप्रसङ्गः, तथाहि—प्रकृत्या कृतं कर्म, न च तस्याः फलनाभिसम्बन्धः, इति कृतनाशः । आत्मना च तन्न कृतमथ च फलेनाभिसम्बन्धः, इत्यकृताभ्यागमः । इति सङ्गतमेव कर्तृत्वमात्मीयम् ।

बौद्धास्तु—"एकज्ञानसन्ततयः सत्त्वाः" इति वचनात् बुद्धिक्षणपरम्परामात्रमेवात्मानमाम्नासिषुः न पुनर्मौक्तिककणनिकरनिरन्तरानुस्यूतैकसूत्रवत्तदन्वयिनमेकम्, तच्चासत्, स्मरणाद्यनुपपत्तेः, न ह्यस्ति सम्भवः पूर्वबुद्धिगृहीतेर्थे उत्तरबुद्धीनां स्मरणप्राप्तिः स्यात्, अन्यगृहीतेऽर्थेऽन्यस्मरणायोगात् । प्रलीने च स्मरणे का कथा प्रत्यभिज्ञायाः ?, सा हि स्मरणानुभवोभयसम्भवा, पदार्थेक्षणसमुद्बुद्धप्राचीनवासनो हि पुमान् स एवायमित्यध्यवस्यति, स एव प्रत्यभिज्ञापदार्थः । एवमन्येऽपि भवभङ्गादयो दोषा ऊहनीयाः ।

यदूचे—

"कृतप्रणाशा-ऽकृतकर्मभोग-भव-प्रमोक्ष-स्मृतिभङ्गदोषान् ।
उपेक्ष्य साक्षात् क्षणभङ्गमिच्छन्नहो ! महासाहसिकः परस्ते"
॥ १ ॥ इति ।

अत्राहुर्वेदान्तिनः—नन्वस्तु जीवपदार्थः स पुनः प्रतिक्षेत्रं भिन्न इति का वाचोयुक्तिः ? तस्य सर्वत्रैकत्वात् ।

तदुक्तम्—

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १ ॥
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥ २ ॥
तथेदममलं ब्रह्म निर्विकल्पमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं प्रकाशते ॥ ३ ॥
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्" ॥४॥ इति '

तदप्यसारम् । नारक-तिर्यगादयो हि अनन्ता जीवाः नानाविधशरीरमानसोपघातसम्पातैर्दुःखिता एव, तदनन्तभागवर्तिनस्तु सुखिनः, एवमनन्ता बद्धाः, तदनन्तभागवर्तिनस्तु मुक्ताः, तेषां च सर्वेषामेकत्वे न कोपि सुखी प्राप्नोति, बहुतरोपघाताऽन्वितत्वात्, यथा सर्वाङ्गरोगपरिग्रस्तोऽङ्गुल्येकदेशेन नीरोगो देवदत्तः । एवं न कोपि मुक्तः, बहुतरबद्धत्वात्, यथा सर्वाङ्गकीलिताऽङ्गुल्येकदेशमुक्तः । नात एकभावे सर्वात्मनां सुखादिकमुपपत्तिमदिति नानात्वमेव विचारसहम्, सर्वगतत्वाच्च गगनवत्, सुख-दुःख-बन्ध-मोक्षादय आत्मनः कथमुपपद्येरन् ?, यत्र हि सुखादयः न तत् सर्वगतम्, यथा देवदत्तः । अपि च न च कर्त्ता, न च भोक्ता, न च मन्ता, न च संसारी जीवः स्यात् एकत्वात् सर्वजीवानाम्, यच्चैकम्, न तस्य भवन्ति कर्तृत्वादयः, यथा नभसः । ज्ञानदर्शनोपयोगलक्षणो जीवः, स चोपयोगः प्रतिदेहमुत्कर्षापकर्षभेदादनन्तभेदः, ततो जीवास्तद्भेदादनन्तभेदा एव, एवं च लक्षणभेदाद् भिन्ना एव जीवाः कुम्भादिवत्, यच्च भिन्नं न भवति नामुष्य लक्षणभेदः, यथा नभसः, इति सिद्धं नानात्व-

मात्मनः । यदुवाच कणादमुनिः—“ व्यवस्थातो नाना ” इति कश्चित्सुखी, कश्चिद् दुःखी, कश्चिद् मुक्तः, कश्चिद् बद्धः, इत्यादिरूपा प्रत्यक्षसिद्धा व्यवस्था प्रतिनियता नोपपद्येत विना नानात्वमात्मन इति तदर्थः, इति ।

एवं चाद्वैतैकान्तपक्षः प्रत्युक्तः ।

तदाह स्तुतिकारः श्रीसमन्तभद्रः—

“ अद्वैतैकान्तपक्षेऽपि दृष्टो भेदो विरुध्यते ।
कारकाणां क्रियायाश्च नैकं स्वस्मात् प्रजायते ॥ १ ॥
कर्मद्वैतं फलद्वैतं लोकद्वैतं च नो भवेत् ।
विद्याविद्याद्वयं न स्याद् बन्धमोक्षद्वयं तथा ॥ २ ॥
हेतोरद्वैतसिद्धिश्चेद् द्वैतं स्याद्धेतुसाध्ययोः ।
हेतुना चेद्विना सिद्धिर्द्वैतं वाङ्मात्रतो न किम् ? ॥ ३
अद्वैतं न विना द्वैतादहेतुरिव हेतुना ।
संज्ञिनः प्रतिषेधो न प्रतिषेध्यादृते क्वचित् ” ॥४॥ इति ॥१॥

उक्तो जीवः । स च द्वेधा संसारी मुक्तश्च, तत्र संसारिजीवस्वरूपमावेदयति—

## सावरणः संसारी ॥ २ ॥

आव्रियतेऽनेनेत्यावरणं कर्मेत्यर्थः । तच्च पौद्गलिकम्, तथाहि कर्म पौद्गलिकं, जीवस्य पारतन्त्र्यनिमित्तत्वात् निगडादिवत् न च क्रोधादिना व्यभिचारः, तेषां जीवपरिणामानां पारतन्त्र्यस्वभावत्वात्, क्रोधादिपरिणामो हि जीवस्य पारतन्त्र्यम्, न पुनः पारतन्त्र्यनिमित्तमिति । तथा कर्म मूर्त्तं तत्सम्बन्धे वेदनोद्भवात् धूमध्वजादिवत् । भवति च कर्मसम्बन्धे वेदनोद्भवः, तस्मात् तद् मूर्त्तम् । तथा मूर्त्तं कर्म

आत्मनो ज्ञानादीनां च तद्धर्माणां व्यतिरिक्तत्वे सति बाह्ये-न स्रक्चन्दनाङ्गनादिना बलस्याऽऽधीयमानत्वात्, इह यस्याऽ-न्यात्मविज्ञानादेः सतो बाह्येन वस्तुना बलमाधीयते तद् मूर्त्तं दृष्टम्, यथा स्नेहादिनाऽऽधीयमानबलो घटः, आधीयते च बाह्यैर्मिथ्यात्वादिहेतुभूतैर्वस्तुभिः कर्मण उपचयलक्षणं बलम्, तस्मात् तद् मूर्त्तम् । तथा कर्म मूर्त्तं आत्माद्यतिरिक्तत्वे सति परिणामित्वात् क्षीरवत् । एवमन्येपि हेतवो द्रष्टव्याः । ननु चात्रिचैवावरणं न पौद्गलिकं कर्म मूर्त्तनानेनामूर्त्तस्य ज्ञानादेराव-रणानुपपत्तेः, इतरथा देहादेरप्यावारकत्वप्रसङ्गात्, तन्न मदि-रादिना मूर्तेनाप्यमूर्तायाश्चेतनाया आवरणोपलम्भात्, अमूर्त्तस्य चावारकत्वे गगनादेर्ज्ञानान्तरस्य च तदापत्तेः । तद्विरुद्ध-त्वात्तस्य तन्नेति चेत् ?, तर्हि देहादेरप्यत एव तद् मास्म भूत्, तद्विरुद्धस्यैव तदावारकत्वप्रसिद्धेः । प्रवाहेण प्रवर्तमानस्य ज्ञानादेरविद्योदये निरोधात्, तस्यास्तद्विरोधगतौ मदिरादिवत् पौद्गलिककर्मणोऽपि सा समस्तु, विशेषाभावात्, तथाहि—आत्मनो मिथ्याज्ञानादिः पुद्गलविशेषसम्बन्धनिबन्धनः, तत्स्वरूपान्यथाभावस्वभावत्वात्, उन्मत्तकादिजनितोन्मादा-दिवत्, ननु चात्मगुणत्वात् कर्मणां कथं पौद्गलिकत्वमिति ?, तद् मन्दम्, तेषामात्मगुणत्वे तत्पारतन्त्र्यनिमित्तत्वविरोधात् सर्व-दाऽऽत्मनो बन्धानुपपत्तेः सदैव मुक्तिप्रसक्तेः, न खलु यो यस्य गुणः स तत्पारतन्त्र्यनिमित्तमर्हति भवितुम्, यथा पृथिव्यादे रूपादि, आत्मगुणश्च धर्माधर्मसंज्ञकं कर्म परैरभ्युपेयते इति न तदात्मनः पारतन्त्र्यनिमित्तं स्यात्, न चैवम्, आत्मनः पारतन्त्र्येण प्रमाणतः प्रतीतेः । तद्यथा परतन्त्रोऽसौ, हीन-स्थानपरिग्रहवत्वात् मद्योद्रेकपरतन्त्राऽशुचिस्थानपरिग्रहव-

द्विशिष्टपुरुषवत्। हीनस्थानं हि शरीरम्, आत्मनो दुःखहेतुत्वात्, कारागारवत् तत्परिग्रहवांश्च संसारी जीवः प्रसिद्ध एवेति। न च देवदेहे तदभावात् पक्षाव्याप्तिः, तस्यापि तत्सत्त्वात्, यत्परतन्त्रश्चासौ; तत्कर्मेति। ननु आत्मकर्मणोः सम्बन्ध आदिमान् आदिविरहितो वा?, आदिमे किं पूर्वं जीवः प्रसूयेत पश्चात् कर्म?, आहोस्वित् पूर्वं कर्म पश्चाद् जीवः?, युगपद्वा?, इति त्रयो विकल्पाः, तत्र नाद्यस्तावत् कक्षीकारः क्षेमकारः, यतो न कर्मतः पूर्वं खरविषाणस्येवात्मनो युज्यते सम्भवः अहेतुकत्वात्, अहेतुकं हि नोदेति खरशृङ्गवत्। जायमानं खलु सहेतुकमेव प्रतीतिसिद्धं यथा घटादिपदार्थसार्थः। निष्कारणस्य च जातस्य निष्कारण एव विलयः स्यात्। अथ कर्मणः पूर्वमनादिकालसिद्ध एवात्मेति किं तस्य सहेतुकनिर्हेतुकत्वमीमांसयेति चेत्?; तदप्यशस्यम्; जीवस्य कर्मसम्बन्धाभावानुसङ्गात् अकारणत्वाद् नभस इव। अथ निष्कारणोऽप्यसौ भवतीति मतिः, तर्हि मुक्तस्याप्यसौ भूयो भविष्यति निष्कारणत्वाविशेषात्, ततश्च मुक्तावपि क आश्वासः?। अथवा कर्मयोगाभावाद् नित्यमुक्त एवासौ स्यात्। कथं वा मोक्षव्यपदेशस्तस्य सम्भवेत् न ह्यबद्धस्य नभसो मुक्तव्यपदेशो दृष्टः, इति न समगस्त प्रथमः पक्षः। द्वितीयोऽप्ययुक्तः कर्तुर्जीवस्याभावेन हि जीवात् प्राक् नार्हत्युद्भवितुं कर्म, अक्रियमाणस्य कर्मत्वाभावात्, निष्कारणश्चेत्थमसौ कर्मोद्भवः स्यात्, ततोऽकारणोद्भवस्याकारणविलयानुषङ्गः। एतेन तृतीयपक्षोऽपि निरस्त एव ज्ञेयः। न हि युगपदुत्पन्नयोर्जीवकर्मणोः "अयं जीवः कर्त्ता इदं तत्कर्म" इति व्यपदेशो गोसव्येतरविपाणवद् सम्भवी।

अथ 'आदिविरहितः' इति द्वितीयो विकल्पः। अनादिरेव जीवकर्मणोः सम्बन्ध इति यदि तात्पर्यम्, तदप्ययौक्तिकम्, एवमपि मोक्षाभावदोषस्य तादवस्थ्यात्, यो ह्यनादिः संयोगः सोऽनन्तो दृष्टः यथा गगनात्मनोः, न ह्याकाशेन सह जीवस्य कदापि संयोगो निवर्तते एवं कर्मणाऽपि सहासौ कथं निवर्तेत ?, कथं चातः सूपपादः स्याद् मुक्तभावः ? इति।

अत्रोच्यते—

जीवकर्मणोः संयोगसन्तानोऽनादिरेव, न चातोऽसावनन्त एव भवेदिति युक्तं वक्तुम्, अनादेरपि संयुक्तवस्तुसन्तानस्य सान्तत्वोपलम्भात्, यथा हि बीजाङ्कुरयोः सन्तानः, तथाहि—बीजाङ्कुरयोर्मध्येऽन्यतरदनिर्वर्तितकार्यमेवेयद् विहतं तत्रानयोर्हत एव सन्तानः। एवं कुक्कुट्यण्डकयोः, पितापुत्रयोरपि वदितव्यम्। यथा वा काञ्चनोपलयोरनादिकालप्रवृत्तसन्तानभावगतोऽपि संयोगः ज्वलज्ज्वलनपरितापाद्युपायेन व्यवच्छिन्नो भवति, तथैव जीवकर्मणोरपि संयोगोऽनादिसन्तानगतोऽपि तपःसंयमाद्युपायेन विदलितो भवति, नातो मोक्षानुपपत्तिः। नन्वेष जीवकर्मणोः संयोगः जीवनभसोरिवानादिः, काञ्चनोपलयोरिव वा ? आद्ये तत्प्रहाणायोगात् मोक्षानुपपत्तिः। द्वितीये सर्वजीवानां तत्प्रहाणसम्भवेन मुक्तत्वप्रसक्तेः शून्यतानुषङ्गः संसारस्येति

चेत् ? न, उभयथाप्युपलब्धेः उभयमेव जीवस्वभावमविशेषेण प्रतिपद्यामहे तथाहि—प्रथमोऽनाद्यनन्तसंयोगोऽभव्यानां द्रष्टव्यः। द्वितीयोऽनादिसान्तसंयोगो भव्यापेक्षयाऽवधारणीयः। ननु जीवत्वसामान्येऽपि "अयं भव्यः अयमभव्यः" इति किंकृतोयं विशेषः ?। नच जीवत्वसामान्येपि यथा नारकतिर्यग्भावादयो विशेषाः तथा भव्याभव्यत्वविशेषो भवेदेवेति वदितव्यम्, कर्मजनिता हि इमे नारकभावादिविशेषाः । नतु स्वाभाविकाः भव्याभव्यत्वविशेषोपि यदि कर्मजनितस्तदा भवतु को निवारयिता ?, न पुनरेषोऽभ्युपगमः इति । उच्यते यथा हि जीवनभसोर्द्रव्यत्वसत्त्वप्रमेयत्वादौ समानेपि जीवाजीवत्वादिना भेदः तथा जीवत्वसामान्येपि भव्याभव्यत्वकृतो विशेषो यदि जीवानां स्यात् तदा को दोषः ? । नन्वेवं भव्यभावो नित्योऽविनाशी प्राप्नोति स्वाभाविकत्वात् जीवत्ववत् । इष्टत्वे मोक्षाभावप्रसङ्गः, न हि भव्यभावे नित्यावस्थायिनि संभवति निर्वाणम् "सिद्धो न भव्यो नाप्यभव्यः" इति सूक्तेः ।

अत्राभिदध्मः—

यथा खलु घटप्रागभावोऽनादिस्वभावजातीयोपि घटोत्पादे सनिधनो निभालितः, एवं भव्यत्वस्यापि ज्ञानतपःसाचिवचरणक्रियोपायतोऽभावः स्यात् तर्हि का क्षतिः ? । नन्वेवं सति भव्यजीवशून्यः संसार आसज्येत, अभव्यैकसाम्राज्यं जगत् स्यात्; तथाहि स्तोकस्तोकाकृष्यमाणधान्यस्य

धान्यकोष्ठागारस्य यथा कदापि समुच्छेदः प्राप्नोति, तथैव कालस्यानन्त्यात् षण्मासपर्यन्तेऽवश्यमेकस्य भव्य-जीवस्य निर्वाणगमनात् सर्वस्यापि भव्यराशेः समुच्छेदः स्यादेवेति कः किमाह । नैवम् । अनन्तो हि भव्यराशिः । तथाहि इह यद् बृहदनन्तकेनानन्तं तत् स्तोकस्तोकतयाऽप-चीयमानमपि नोच्छिन्नं भवति यथा प्रतिसमयं वर्तमानतापत्त्या-ऽपचीयमानोऽपि अनागतकालसमयराशिः, प्रतिसमयं बुद्धितः प्रदेशापहारेणापचीयमानो निखिलगगनप्रदेशराशिर्वेति कुतः भव्यराशेः सर्वथा समुच्छेदः ? । इदमत्रैदंपर्यम् । तुल्यावेव किलातीतानागतकालौ । अतीतकालेन पुनरेक एव निगो-दानन्ततमो भागोऽद्यापि भव्यानां सिद्धिसौधमध्यारुक्षत् तथैव भविष्यतापि कालेन तावन्मात्र एव भव्यानन्तभागः सिद्धिसम्पदमासादयन् युक्तो घटमानकः, न हि हीनाधिकः भविष्यतोपि कालस्यातीततुल्यत्वात् । तत एव-मपि सति न सर्वभव्यानामुच्छेदः सङ्गतः । सर्वेणापि कालेन तदनन्तभागस्यैव सिद्धिगमनसम्भवोपदर्शनात् । ननु भव्या अपि सन्तो यदि सर्वेणापि कालेन सर्वेपि सिद्धिं नाप्नुयुः , तदाऽमीषु अभव्यतः को विशेषः ?, अभव्या एव परमार्थतः स्युरिति चेत्?, उच्यते—भव्यः खलवत्र सिद्धिगमनयोग्योऽभिप्रेतः, नतु यः सिद्धि यास्यत्येव, न च योग्यत्वसद्भावे सर्वोपि सिध्ये-युरित्यास्ति नियमः, किन्तु सिद्धिगमनौपायिकसामग्रीसम-

वधाने सिध्यन्ति, यथा हि हेम-मणि पाषाण-चन्दन-काष्ठादिके सत्यपि प्रतिमार्हे दलिके न सर्वस्मिन् प्रतिमा विधीयते, अपि तु यत्र तन्निर्वृत्तियोग्या सामग्री सम्भवति, तत्रैवासौ विहिता भवति। न च तदसम्भवमात्रेण प्रतिमाविषयेऽयोग्यता शक्यते वक्तुम्; न ह्येवं नियमो विधीयते, प्रतिमायोग्ये वस्तुनि प्रतिमा भवत्येवेति, किन्तु यदा तदा तद्योग्य एव सा भवति, नान्यत्र, एवं प्रकृतेपि न भव्यत्वमात्रेण सर्वः सिध्येत् किन्तु सामग्रीसम्पत्तौ, न च तदसम्पत्तावपि तस्याऽभव्यत्वं भवेत् किन्तु यदा तदा हि भव्यस्यैव मुक्तिर्नान्यस्येति ॥ ननु सर्वमेतत् तदैवोपपत्तिपदवीं परिस्पृशेत् यदा नाम कर्मवस्तु सिद्धिसौधमध्यारोहेत्, तदेव तु दुरुपपादं प्रमाणाभावादितिचेत्, उच्यते; प्रतिप्राणिप्रसिद्धयोः सुखासुखयोरस्ति कश्चिद् हेतुः, कार्यत्वात्, अङ्कुरस्येव बीजम् स च कर्मैव। न च प्रसिद्धा एव स्रक्चन्दनाङ्गनादयः, अहि-विष-कंटकादयश्च सुखासुखयोर्हेतुभावेन घटमानकाः सन्ति, किमलौकिकेनामुनेति भाषितव्यम् ?। इह तुल्यसाधनयोरिष्टशब्दादिसुखसाधनसमेतयोरनिष्टार्थसाधनसमेतयोश्च द्वयोर्बहूनां वा फले सुखदुःखानुभवलक्षणे समुपलब्धतारतम्यस्यान्यथानुपपद्यमानत्वेन-कर्मपदार्थगमकत्वोपपत्तेः। अपिच शरीरान्तरपूर्वकमिदमाद्यं-बालशरीरम् इन्द्रियादिमत्त्वात् युवशरीरवत् आदिपदेन च सुखदुःखित्वप्राणापाननिमेषोन्मेषादिमत्त्वादिहेतूनां परिग्रहः। न च जन्मान्तरातीतशरीरपूर्वकमेवेदमिति सङ्गतं वचः,

तस्याऽपान्तरालगतावसत्त्वेन तत्पूर्वकत्वानुपपत्तेः । न चाशरीरिणो नियतगर्भदेशस्थानप्राप्तिपूर्वकः शरीरग्रहो युज्यते, नियामककारणाभावात् । यच्चेह बालशरीरस्य पूर्वं शरीरान्तरं तदेव कर्म कार्मणशरीरपदार्थः इति, एवमन्येपि तद्गमकप्रमाणस्तोमा आकरग्रन्थतो वेदितव्या इति सिद्धं कर्म । तत्स्वरूपं पुरस्ताद् वक्ष्यामः ॥ २ ॥

अथ संसारिजीवभेदानाह—

## पृथिव्यप्तेजो-वायु-वनस्पति-द्वि-त्रि-चतुष्पञ्चेन्द्रियभेदात् नवधा ॥ ३ ॥

नवधा तावत् संसारिजीवो भगवदागमे प्रज्ञप्तः । यद्यपि पृथिव्यादीनामेकेन्द्रियत्वेन पञ्चधा संसारिजीवो भवितुमर्हति तथापि पृथिव्यादिभूतानामचेतनत्वकदाग्रहं निग्रहीतुं साक्षात् भेदेनाऽमूनि निरादिक्षद् भगवान् सूत्रकारः ।

तत्र पृथिव्यादीनां स्पर्शैकेन्द्रियत्वम् ।

ननु पृथिव्यादीनां सचेतनत्वे किञ्चित् प्रमाणमप्यस्ति ? अस्त्येव खल्वागमः प्रमाणम्, तत्प्रामाण्यं च आप्तप्रवक्तृत्वप्रसाधनेन प्रसाधितमेव पूर्वम् । ननु विशेषाश्वासनिबन्धनं किञ्चिद् लैङ्गिकं मानं मनुषे न वा ?, ननु किमनेन मेनानेन ? आगमे शङ्कितविपर्यस्तचेतसः पुंसः लैङ्गिकेऽप्यनाश्वासात् । मूलाभावेभित्तिनिर्मितिवच्चानाश्वस्तागमस्य लैङ्गिके आश्वासस्य दुःस-

म्भवत्वात् गृहीतप्रामाण्यकस्य पुनस्तत्र लैङ्गिकेनाऽऽश्वासप्रयोजनाभावात् ।

इमा वा निबोधत ! प्रयोगप्रणालीः—

सात्मिका विद्रुमशिलादिरूपा पृथ्वी, छिन्नाया अप्यस्याः पुनस्तत्स्थान एव समानजातीयाङ्कुरोत्थानात्, अर्शोऽङ्कुरवत् ।

भौममम्भः सचेतनम्, क्षतभूसजातीयस्य स्वभावस्य सम्भवात्, दर्दुरवत् । नाभसमपि सचेतनम्, अभ्रादिविकारे स्वतः सम्भूय पातात् मीनादिवत् । सात्मकं तेजः आहारोपादानात्, तद्वृद्धौ विकारविशेषोपलम्भेश्च, नरवत् ।

सात्मको वायुः, अन्यप्रेरितत्वे तिर्यग्गतिमत्त्वात् गोवत् । वनस्पतिरप्यात्मवान, छेदादिभिर्ग्लान्यादिप्रतीतेः पुरुषाङ्गवत्,

कृमिशङ्खगण्डुपदजलौकाकपर्दप्रभृतियूकामत्कूणमत्कोटकलिक्षादिपतङ्गमक्षिकादंशरोलम्बप्रमुखद्वित्रिचतुरिन्द्रियाणामविगानेन सचेतनत्वं सम्मतं सर्ववादिरूपाणाम्

पञ्चेद्रियाः पुनश्चतुर्धा, नारकाः तिर्यञ्चः देवा मानुषाश्चेति तत्र नरकेषुभवा नारकाः, तेषां निवासो रत्नप्रभा-शर्कराप्रभा-वालुकाप्रभा-पङ्कप्रभा-धूमप्रभा-तमःप्रभा-महातमःप्रभानाम्नीषु घनाम्बुवाताकाशप्रतिष्ठासु सप्तस्वधोधःपृथुतरभूमिषु । ते च तत्राधिकाधिकनित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः परस्परोदीरितदुःखाःसंक्लिष्टासुरोदीरितदुःखाश्च प्राक्चतु-

थ्यो भवन्ति तत्र पुनः सप्तसु भूमिषु क्रमत एकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमाः सत्वानां स्थितिरामता।

तिर्यञ्चः पुनस्त्रेधा, जलचराः स्थलचराः खेचराश्च। तत्र मत्स्य-कच्छप-मकरादयो जलचराः। स्थलचराः पुनश्चतुष्पदोरःपरिसर्पि-भुजसर्पिणो विज्ञेयाः। खेचराश्च रोमजचर्मजपक्षिणः। बाहिर्नृलोकं च विततावितत पक्षिणः। जलस्थलखचराश्च सम्मूर्च्छिनो गर्भजाश्च भवन्ति।

देवाः पुनश्चतुर्धा मज्ञप्ताः तद्यथा-भवनवासिनो व्यन्तरा ज्योतिष्का, वैमानिकाश्च। तत्रासुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमारभेदात् दशधा भवनवासिनः। किन्नरकिम्पूरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचभेदेनाष्टधा च व्यन्तराः। ज्योतिष्काश्च सूर्याश्चन्द्रमसो ग्रहनक्षत्र मकीर्णतारकाश्चेति पञ्चधा, अमी च नृलोके मेरुप्रदक्षिणानित्यगतयो भवन्ति, तत्कृतश्च कालविभागः। कल्पोपपन्नकल्पातीतविधयश्च वैमानिकाः, ते च सौधर्मेशान-सानत्कुमारमाहेन्द्र-ब्रह्मलोक-लान्तक-महाशुक्र-सहस्त्रारेषु,आनत-प्राणतयोः, आरणाऽच्युतयोः, नवसु ग्रैवेयकेषु, विजयवैजयन्तजयन्तापराजितेषु, सर्वार्थसिद्धे चोपर्युपरि वर्त्तन्ते।

तत्र प्राग्ग्रैवेयकेभ्यः कल्पाः अतोन्ये कल्पातीताः। मानुषास्तु जम्बूद्वीप-धातकी-पुष्करार्धस्वरूपसार्धद्वीपक्षेत्रे वर्त्तन्ते ततः परं मानुषोत्तरोगिरिः। एते च मनुष्या आर्या म्लेच्छा

श्चेति द्विधाभवन्ति । तत्रार्याः षोढाः क्षेत्रार्या जात्यार्याः कुलार्याः कर्मार्याः शिल्पार्याः भाषार्याश्चेति, अतो विपरीता म्लेच्छाः इति । जीवानां जन्म च त्रेधा भवति, सम्मूर्च्छनं गर्भ उपपातश्चेति । तत्र जरायुजाण्डपोतजानां गर्भः, नारक देवानामुपपातः, शेषाणां सम्मूर्च्छनम् ।

जीवानां शरीराणि च पञ्चधा, औदारिकं वैक्रिय-माहारकं तैजसं कार्मणं चेति । तेषां परं परं सूक्ष्मम् । प्रदेश-तोऽसङ्ख्येयगुणं प्राक्तैजसात्, तैजसकार्मणे चानन्तगुणे अ-प्रतिघाते अनादिसम्बन्धे च सर्वस्य भवतः । अत्र च कार्मण शरीरं निरुपभोगम् । औदारिकं च गर्भे सम्मूर्च्छने वोद्भवति । वैक्रियं चौपपातिकं, लब्धिप्रत्ययं च । शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधरस्यैव । नारकसम्मूर्च्छिनो नपुंसकाः, न देवाः । औपपातिकाश्चरमदेहा उत्तमपुरुषा असङ्ख्येयवर्षायुषश्चानपवर्त्यायुषो भवन्ति । तत्रोत्तमपुरुषास्तीर्थंकरचक्रवर्त्यर्धचक्रिणः । चरमदेहास्तु मनुष्या एव, तेषामेव मोक्षाधिकारात् इतिप्रोक्ता मनुष्याः । अत्रत्यमतिविस्तरं तत्त्वमनुद्देश्यत्वात् लेखगौरवभयाच्चावश्यज्ञेयमप्युपेक्षितमिति ॥ ३ ॥

उक्तः संसारी जीवः, साम्प्रतं मुक्तजीवप्रतिपादनप्रसङ्गे तद्भावं मुक्तिमेव निर्वक्ति—

## परमानन्दो मुक्तिः ॥ ४ ॥

परमो निरातिशय आनन्दः सुखं कर्मविमोचनाद् मुक्तिः, मोक्षः, अपवर्ग इति प्रसिद्धिः । असौ च केवलज्ञानिनोऽघातिकर्मक्षयापेक्षोत्पादा स्वयं वक्ष्यते सूत्रकृताऽधस्तात् ।

ननु जीवन्मुक्तिरत्र लक्ष्यत्वेनोशाना परमुक्तिर्वा ? आद्ये, उत्तरसूत्राऽसङ्गतिः, अन्त्येऽतिप्रसङ्गः, शरीरभृतामपि केवलज्ञानिनां परमानन्दसद्भावात् इति चेत्, न, द्वितीयपक्षसमाश्रयणात्, नचाऽतिप्रसङ्गः, अनन्तसुखस्य देहधारिणि विरहात्, एतस्यार्थस्य पूर्वं विस्तरतः प्रतिपादितत्वादिति मा स्म प्रस्मरः । एवं च सति क्षीणाष्टकर्मणो योऽतिशयातीत आनन्दो निरवधिकं सुखं सैव मुक्तिरिति भावः । जीवन्मुक्तिलक्षणं तु शरीरावच्छिन्नं केवलज्ञानम् ।

ननु कथं तर्हि "कृत्स्नकर्मक्षयो मोक्षः" इति ?,

परमानन्दसाधकत्वात्, कृत्स्नकर्मक्षयाभावे परमानन्दरूपाऽसम्पत्तेः ।

ननु कथं खल्वनादिसम्बन्धधारणबन्धुराणि कर्माणि समर्हन्त्यपगन्तुम्, अनादिभावस्यापि विनाशाभ्युपगमे जीवोऽपि कदाचित् स्वरूपं परिजह्यात्, अनादित्वाविशेषाद् इति चेत्, न, अनादित्वस्वीकारेऽपि नाशाभ्युपगमे विरोधानवकाशात्, कश्चैवं न्यधात्मातिबन्धम्, यद् अनादिना नैव विनष्टव्य-

मिति, न ह्यसति विपक्षबाधकप्रमाणे कीदृशोऽपि विद्वान् कीदृशमपि प्रतिबन्धं क्षमते विधातुम् । अपि च विचित्रा भावाः, ये हि केचन सन्तोऽनादयो जीववत्सर्वकालमवतिष्ठमाना एवासते, केचित्पुनः प्रागभावादिवद्भवन्तोऽप्यनादयः प्रतिकूलसामग्रीयोगे विनश्यन्तोऽनुभूयन्त इति । अपचीयमानत्वेनापि हेतुना रागादिदोषाणां निरन्वयविनाशः सुलभ एवेत्यलमधिकेन ।

बार्हस्पत्यादीनामभिप्रायेण पुना रागादयो न लोभादिकर्मोदयनिमित्ताः किंतु कफादिप्रकृतिहेतवः, तथाहि कफहेतुको रागः पित्तनिमित्तो द्वेषः, वातनिदानश्च मोहः, कफादयश्च सर्वदा सन्निहिताः, देहस्य तदात्मकत्वात् नातो वीतरागत्वसम्भव इति न समीचीनम्, रागादेर्व्यभिचारितया कफादिहेतुत्वासिद्धेः, वातप्रकृतेरपि रागद्वेषयोः कफप्रकृतिकस्यापि द्वेषमोहयोः, पित्तप्रकृतेश्च मोहरागयोरुपलम्भेः ।

एवं शुक्रोपचयनिबन्धन एव रागः इत्याद्यप्युच्छृङ्खलम्, अत्यन्तरमणरमणीभवतः परिक्षीणशुक्रस्यापि रागोद्रेकदर्शनात् शुक्रोपचयस्य सर्वस्त्रीसाधारणाऽभिलाषजनकत्वेन कस्यचन कस्यांचनैव रागोद्रेकानुपपत्तेश्च, तस्मात्तथाविधं कर्मैव विचित्रस्वभावतया तदा तदा तत्तत्कारणापेक्षं तत्र तत्र रागादिहेतुरिति । एतेन पृथिव्यम्भोभूयस्त्वे रागः, तेजोवायुप्राबल्ये द्वेषः, जलवाय्वाधिक्ये मोहः, एत-

दपि निरस्तं द्रष्टव्यम्, तस्य विषयविशेषापक्षपातित्वादिति ।

ननु मुक्तेः सादित्वेन भवेत्पुनस्ततो भवावतारः, न, सादित्वासिद्धेः, "कृत्स्नकर्मक्षयो मोक्षः" इति सिद्धान्तितत्वेन कर्मवियुक्तीभावस्य मुक्ततया आत्मनि किञ्चिदानिष्पादनात् । कर्मक्षयस्याऽपि क्षयाभ्युपगमे पुनः कर्माण्यवतरेयुः, हन्त ! इदमेव तु ब्रूमः, ब्रूहि ! तर्हि घटादिक्षयस्यापि परिक्षयम्, पश्य च ध्वस्तस्यैव कुम्भस्य पुनः सद्भावम्, ध्वंसस्य सादिनित्यत्वात् नैतद् इति चेत् तर्हि प्रकृते कर्मप्रध्वंसं किं न विभावयसि ? । अतोऽयं हेयो नियमः—आदिमानश्यत्येव, अनादि सदातनमेवेति, अनादेरपि प्रागभावस्य विनाशितया, सादेरपि ध्वंसस्य नित्यतया च नैयायिकैरभ्युपगमात् ।

एवं च परमानन्दरूपां मुक्तिं भगवान् हरिभद्रसूरिरुवाच—

यन्न दुःखेन सम्भिन्नं न च भ्रष्टमनन्तरम् ।
अभिलाषापनीतं च तज्ज्ञेयं परमं पदम् ॥ १ ॥

ननु मुक्तावन्नपानादिभोगाभावात् कुतः सुखकणिकाऽपि सम्भवेत्, सुखकारणानां मुक्तावभावात्, असति च कारणे फलानिष्पत्तेः इतरथा सुखस्य सदासत्त्वाऽसत्त्वान्यतरप्रसङ्गेन मुमुक्षुप्रवृत्तेर्नैरर्थक्यप्रसङ्गात्, उपलम्भविरोधाच्च,

तत्र, अन्नादिभोगसम्भवसुखस्याऽपवर्गेऽभावात् तथाविध-सुखस्य सुखत्वप्रतिभासेऽपि वस्तुतः क्लेशरूपत्वात्, तथा-विधसुखसत्त्वे च मुक्तेः संसारस्य चाविशेषापत्तेः । अति-प्रचुरवैषयिकानन्दस्य स्वर्ग एव सत्त्वात्, अखण्डस्वर्गीय-जीवनानिरन्तरानुभूतैन्द्रियकसुखराशेः सिद्धस्यैकक्षणिकानन्द-बिन्दुतः स्वल्पत्वात् । अपि च अन्नादिभोगो भोगिवर्गैः क्रियमाणः किंफलः ? बुभुक्षादिनिवृत्तिफलश्चेत्, साऽपि किंफला ? स्वास्थ्यफला चेत्, सिद्धास्तर्हि निरुपमनिराति-शयानन्ताप्रतिपातिस्वास्थ्यभाजः, इति किमेतेषां वैषयिक-सुखासिद्धिकदाग्रहेण ? यथा हि कण्डूसत्त्वे कण्डूयनं भवति मोदाय कण्डूकानाम्, नतु तदभावे, तथैव मोहिनामेव मोहनीयमहिम्ना विषयरमणं रोचते निर्मोहानां तु मोह-नीयविरहेण कुतस्तदाभिमुख्यमपि ? एतच्च मुक्तिसुखम्—

"संवेद्यं योगिनामेव परेषां श्रुतिगोचरम् ।
उपमाऽभावतो व्यक्तमभिधातुं न शक्यते ॥ १ ॥"

सुखादिगुणहीनां च मुक्तिं वदितारो मुक्तिस्वरूपं किं वक्ष्यन्ति ? केन रूपेण मुक्तानामवस्था भवित्री ? कश्च सुखा-दिहीनजीवनभसोः प्रतिविशेषः ? यथा हि नभो व्यापकम्, तथा जीवोऽपि, तथा च ज्ञानादिरहितत्वात् जडं नभः, तथैव जीवोपि मुक्तावस्थायाम्, कथं च जीवस्वरूपं चैतन्यं सर्वथा समुच्छिन्नं भवितुमर्हति ? असाधारणरूपभङ्गे च धर्मिण एव भवति नाशः, चैतन्यात्मनो जीवस्य चैतन्यशून्यत्वे कुतः सत्त्व-

वस्थानम् ? कथं च देहाद्यभावेऽपि नावस्थास्तु ज्ञानादि ? तद्रूपत्वेन जीवस्य आवरणसत्त्वे मन्दमन्दतरतद्रूपोदय-भवनेऽपि सर्वथाऽऽवरणोपक्षये सर्वथा सर्वतः सुस्पष्टतद्रू-पोदयसिद्धेर्न्यांय्यत्वात् । ऐन्द्रियकज्ञानाद्यभावेऽपि आत्म-मात्रापेक्षाविर्भावज्ञानादेर्मुक्ताववश्यमभ्युपगमनीयत्वात् ।

एतेन--

"यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः ।

तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्पते" ॥ १ ॥ इति निरस्तम्, धर्माधर्मप्रभवसुखासुखयोर्मुक्तावस्थायामभावेऽपि स्वभावानन्दप्रादुर्भावस्य प्रसिद्धेः । न च सुखेच्छामृते भवति प्रेक्षाणां प्रवृत्तिः, चिकित्सादावपि दुःखध्वंसनियत-सुखार्थितयैव प्रवृत्तेः । अपि च दुःखे द्वेषमात्रादेव तन्ना-शानुकूलो यत्नो यदि, तदा मूर्च्छादावपि प्रवृत्तिः स्यात्, न च जायत एवाऽनल्पक्लेशक्लिष्टकलेवराणां मरणादौ प्रवृत्तिरिति युक्तम्, तस्या अविवेकप्रवृत्तित्वात्, पुरुषार्थत्वे विवेकानुपयोग एवेति चेत् सत्यं नैयायिकपशूनामेव तद-नुपयोगः, नतु प्रेक्षावताम्, यथावत्प्रयोजनं प्रमायैव तत्प्रवृत्तेः,

अतः साधूक्तम्—

"दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।

नहि मूर्च्छाद्यवस्थायां प्रवृत्तो दृश्यते सुधीः ॥ १ ॥ इति ।

"अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इति श्रुतेरपि सुखासुखोभयत्वावच्छिन्नप्रतियोगिताकाभावस्यैव सिद्धिसम्भवेन केवलसुखमयमुक्तौ बाधकाभावात्, केवलघटवति भूतले घटपटोभयत्वावच्छिन्नप्रतियोगिताकाभावसिद्धावपि केवलघटसत्त्वे बाधकाभाववत् अत एव "सुखमात्यन्तिकं यत्र" इत्यादि स्मृतिरप्याह ।

सेयं मुक्तिः स्फटिकनिर्मलामव्याबाधां सिद्धिशिलामीषत्प्राग्भारापराभिधामुपजग्मुषा जीवेन लभ्यते क्षीणकर्मणः स्वभावत एवोर्ध्वगतित्वेन तत्र गमनात्, परतो धर्मास्तिकायाभावेन, अधस्तात् गौरवविरहेण, तिर्यग्गतेश्च प्रेरकासन्निधानेन प्रतिबन्धात् ।

कर्माष्टकप्रहाणेन च मुक्तौ भवतो भगवतोऽष्टौ गुणाः प्रादुर्भवन्ति, तथाहि—ज्ञानावरणकर्मणः प्रक्षयाद् अनन्तज्ञानम्, दर्शनावरणविलयाद् अनन्तदर्शनम्, मोहनीयनिर्दलनाद् क्षायिकसम्यक्त्वचारित्रे, अन्तरायनिर्णाशात् अनन्तवीर्यम्, वेदनीयप्रमापणात् अनन्तसुखम्, आयुष्ककर्मनिर्घातात् अक्षयगतिः, नामगोत्रकर्मणोः प्रकुट्टनात् अमूर्त्तानन्तावगाहनम्, इति सिद्धाः निरावरणाः सिद्धगुणाष्टका इति ॥ ४ ॥

अथ मोक्षोपायमाह—

## केवलिनोऽघातिकर्मक्षयापेक्षा ॥ ५ ॥

मुक्तिरिति वर्त्तते । सा केवलिनः, केवलज्ञानवतः, केवलज्ञानिन एव मुक्तत्वनियमात् ।

यद् भगवान् हेमचन्द्रः---

"अभावे बन्धहेतूनां घातिकर्मक्षयोद्भवे ।
केवले सति मोक्षः स्यात् शेषाणां कर्मणां क्षये ॥ १ ॥"

ननु केवलिनोऽपि किञ्चिन्निबन्धन एव मोक्षः स्यात्, इतरथा केवलज्ञानानन्तरमेव मुक्तोभावनियमभङ्गात्, एवमेवायुष्मन् ! अत एवाऽऽह 'अघातिकर्मक्षयापेक्षा' इति । वेदनीयादिकर्माणि सर्वज्ञत्वाप्रतिबन्धकत्वात् अघातीनि, तेषां क्षयस्तदपेक्षा तत्समकालभाविनी मुक्तिः परमानन्दलक्षणा ।

इतो हि भगवान् केवलज्ञानी अयोगिनामचरमगुणस्थानान्त्यसमये सर्वाः प्रकृतीः क्षयं नीत्वा एकसमय एव लोकाग्रभागं याति, सर्वार्थसिद्धिनामनो विमानतो द्वादशसु योजनेषु वर्त्तमानायाः सिद्धिशिलाया एकयोजनावसानेऽलोको वर्त्तते । ततश्च पूर्वं लोकाग्रप्रदेशेऽकर्मका निर्लेपा मुक्तसंसारा अपुनरावर्त्तिनः परमकृतकृत्याः परमनिष्ठितार्थाः सिद्धा भगवन्तो भासन्ते ।

यदाहुः-

"मनोज्ञा सुरभिस्तन्वी पुण्या परमभासुरा ।
प्राग्भारा नाम वसुधा लोकमूर्ध्नि व्यवस्थिता ॥१॥
नृलोकतुल्यविष्कम्भा सितच्छत्रनिभा शुभा ।
ऊर्ध्वं तस्याः क्षितेः सिद्धा लोकान्ते समवस्थिताः" ॥२॥

तथा—

"सुरासुरनगेन्द्राणां यत्सुखं भुवनत्रये ।
तत्स्यादनन्तभागेऽपि न मोक्षसुखसम्पदः" ॥ १ ॥

तथा—

"न वि अत्थि मनुस्साणं तं सुक्खं नैव सव्वदेवाणं ।
जं सिद्धाणं सुक्खं अव्वाबाहं उवगयाणाम्" ॥१॥

अन्येऽपीदमाहुः—

"आनन्द ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते ।
यदा दृष्ट्वा परं ब्रह्म सर्वं त्यजति बन्धनम्" ॥ १ ॥

स्यादेतत् सिद्धिं प्रायुषां सर्वेषां सिद्धानामादिमत्त्वात् कोऽप्यवश्यमादि सिद्धो भवेत्, नैवम्, सर्वाण्यपि हि शरीराणि, अहोरात्राणि चादियुक्तानि, अथ च कालस्याऽनादित्वात् नाद्यं शरीरमहोरात्रं वा किमपि शक्यज्ञानम्, एवं प्रकृतेऽप्यवधेयम् ।

अवगाहनशक्तिमतां च सिद्धानामनन्तानामपि नाल्पप्रदेशपरस्परोपरोधः शङ्कितव्यः, यदाहाऽमृतचन्द्रसूरिः—

"अल्पक्षेत्रे तु सिद्धानामनन्तानां प्रसज्यते ।
परस्परोपरोधोऽपि नावगाहनशक्तितः ॥ १ ॥
नानादीपप्रकाशेषु मूर्त्तिमत्स्वपि दृश्यते ।
न विरोधः प्रदेशेऽल्पे हन्ताऽमूर्त्तेषु किं पुनः ? ॥ २ ॥"

एतां मुक्तिं गत्वापि धर्मनिकारमसहिष्णवो धर्मकर्त्तारो

ज्ञानिनो भवकान्तारे पुनरागन्तुं नार्हन्ति, भवतरुबीजभूतकर्मणः समूलकाषं कषणात् अन्यथा मुक्तत्वभङ्गप्रसङ्गात् ।

इदमेवाऽन्येप्याहुः—

"क्षीरात्समुद्धृतं त्वाज्यं न पुनः क्षीरतां व्रजेत् ।
पृथक्कृतस्तु कर्मभ्यो नात्मा स्यात्कर्मवान्पुनः ॥ १ ॥
यथा नीता रसेन्द्रेण धातवः शातकुम्भताम् ।
पुनरावृत्तये न स्युस्तद्वदात्माऽपि योगिनाम्" ॥ २ ॥

मुक्तिं गत्वापि यदि अधोऽवतारः स्यात्, तर्ह्यसौ मुक्तिरेव न, स्वर्ग एव वेदितव्यः, अतो नित्यज्ञानानन्दरूपां मुक्तिमभ्युपगच्छतो गल एव पतितः स्यात् मुक्तानां भवावतारानभ्युपगमः, अन्यथा भवमवतेरुषो भगवतो निरतिशयानन्दानुभवे त्रुटिप्रसक्तेः, संसारे तद्विरोधिकारणसंयोगात्, अन्यथा संसारिणोऽपि मुक्तताप्रसक्तेः ॥ ५ ॥

उक्तो जीवः, अथाऽजीवतत्त्वं प्रस्तौति—

**अजीवो धर्माधर्माकाशकालपुद्गलैः पञ्चधा ॥ ६ ॥**

यदाहुरत्र—

"अजीवाः स्युर्धर्माधर्मविहायःकालपुद्गलाः ।
जीवेन सह पञ्चापि द्रव्याण्येते निवेदिताः ॥ १ ॥

तत्र कालं विना सर्वे प्रदेशप्रचयात्मकाः ।
विना जीवमचिद्रूपा अकर्त्तारश्च ते मताः ॥ २ ॥
कालं विनाऽस्तिकायाः स्युरमूर्त्ताः पुद्गलं विना ।
उत्पादविगमध्रौव्यात्मानः सर्वेऽपि ते पुनः" ॥३॥ इति

तत्राऽस्तिकायः, अस्तयः प्रदेशाः प्रकृष्टा देशाः, निर्विभागानि खण्डानि, तेषां कायः समुदाय उच्यते ।

तत्र गतिलक्षणो धर्मः, प्रमाणं चात्र गतिपरिणतयोर्जीवपुद्गलयोरलोके गमनविरहान्यथानुपपत्तिरेव । स्थितिलक्षणोऽधर्मः, तत्रापि जीवपुद्गलयोः स्थितिपरिणतयोरलोके स्थितिविरहान्यथानुपपत्तिरेव । अवगाहनागुणमाकाशम्, तत्र च मानं द्रव्याणां साधारत्वान्यथानुपपत्तिः । वर्त्तनालक्षणः कालः, वर्त्तना च नवपुराणादिपरिणामः, तत्र चार्धतृतीयद्वीपसमुद्राऽन्तर्वर्त्ति कालद्रव्यमेव हेतुः, तस्य तद्भावभावित्वात् ।

श्रीहेमचन्द्रसूरयस्त्वाहुः–

"लोकाकाशप्रदेशस्था भिन्नाः कालाणवस्तु ये ।
भावानां परिवर्त्ताय मुख्यः कालः स उच्यते ॥ १ ॥
ज्योतिःशास्त्रे यस्य मानमुच्यते समयादिकम् ।
स व्यावहारिकः कालः कालवेदिभिरामतः ॥ २ ॥
नवजीर्णादिरूपेण यदमी भुवनोदरे ।
पदार्थाः परिवर्त्तन्ते तत्कालस्यैव चेष्टितम्" ॥ ३ ॥

स्पर्श-रस-गन्ध-वर्णवन्तः पुद्गलाः । शब्द-बन्ध-सौक्ष्म्य-स्थौल्य-संस्थान-भेद-तमश्छायाऽऽतपाद्द्योतवन्तश्च । तत्र शब्दः षोढा-ततो विततो घनः शुषिरो घर्षो भासश्चेति । बन्धस्त्रेधा-प्रयोगबन्धो विश्रसाबन्धो मिश्रश्चेति । सौक्ष्म्यं द्वेधा अन्त्यमापेक्षिकं च, तत्राऽन्त्यं परमाणुष्वेव, आपेक्षिकं द्व्यणुकादिषु, संघातपरिणामापेक्षं भवति, तद्यथा, आमलकाद् बदरमिति । स्थौल्यमपि तथैव द्विधा विज्ञेयम्, तत्राऽन्त्यं सर्वलोकव्यापिनि महास्कन्धे भवति, आपेक्षिकं पुनर्बदरादिभ्य आमलकादिषु । संस्थानमनेकधा, दीर्घह्रस्वाद्यनित्थंत्वपर्यन्तम् । भेदः पञ्चधा, औत्कारिकः, चौर्णिकः, खण्डः, प्रतरः, अनुतटश्चेति । तमश्छायातपोद्द्योताश्च परिणामजाः । सर्व एते स्पर्शादयः पुद्गलेष्वेव भवन्ति ।

ननु तमःप्रभृतीनां पौद्गलिकत्वे किं मानम् ? उच्यते, तमः पुद्गलपरिणामः, दृष्टिप्रतिबन्धकारित्वात्, कुड्यादिवत्, आवारकत्वात् पटादिवत् । छायाऽपि तथैव, शिशिरत्वात् आप्यायकत्वात् जलवातादिवत्, छायाऽऽकारेण परिणममानं प्रतिबिम्बमपि पौद्गलिकं साकारत्वात्, आतपोऽपि तथैव तापकत्वादेः अग्निवत्, उद्द्योतश्च तथैव, आह्लादकत्वादेः, नीरवत् ।

पुद्गला द्विविधाः—अणवः स्कन्धाश्च, सङ्घाताद् भेदात् सङ्घातभेदाच्च स्कन्धा उत्पद्यन्ते, अणुः पुनर्भेदादेव, चाक्षुषाश्च स्कन्धा भेदसङ्घाताभ्यामिति ।

तत्र धर्माधर्मजीवानामसङ्ख्येयाः प्रदेशाः, व्योम्नः पुनरनन्ताः; सङ्ख्येया असङ्ख्येया अनन्ताश्च पुद्गलानाम् । अणोस्तु न भवन्ति प्रदेशाः । अवगाहश्च लोकाकाशे भवति, अन्यत्राऽवगाहिनां विरहात्, धर्माधर्मयोः पुनरवगाहः सर्वत्र लोकाकाशे, पुद्गलानां चैकप्रदेशादिषु विकल्पनीयः, तथाहि परमाणोरेकस्मिन्नेव प्रदेशे, द्व्यणुकस्यैकस्मिन् द्वयोश्च, त्र्यणुकस्यैकस्मिन् द्वयोस्त्रिषु च, एवं चतुरणुकादीनामप्यवधेयम्, लोकाकाशप्रदेशानामसङ्ख्येयभागादिषु जीवानां भवत्यवगाहः आ सर्वलोकात्, प्रदेशसंहारविसर्गाभ्यां दीपवदिति ।

एते च धर्मादयो भावाः परोक्षाः स्वकार्यानुमेयाः प्रामाणिका एव, न ह्युपलम्भाभावमात्रत एव वस्त्वसत्त्वसिद्धिः, किन्तूपलब्धिलक्षणप्राप्तस्यैवाऽर्थस्याऽनुपलम्भादभावसिद्धिः । उपलब्धिलक्षणप्राप्तिश्च प्रतियोगि-प्रतियोगिव्याप्येतरयावत्प्रतियोग्युपलम्भकसमवधानम् ।

यद् भगवान् श्रीहरिभद्रसूरिः—

"उपलब्धिलक्षणप्राप्तिस्तद्धेत्वन्तरसंहतिः" ।

'अमुमेवाऽर्थं दृढीचकार श्रीईश्वरकृष्णोऽपि—

"अतिदूरात् सामीप्याद् इन्द्रियघातात् मनोनवस्थानात् ।
सौक्ष्म्याद् व्यवधानाद् अभिभवात्समानाभिहाराच्च" ॥१॥

'तस्मादुक्तकार्यलिङ्गेनाऽनुमाप्रमाणपदवीमुपजगन्वांसो धर्मायः सर्वज्ञनिर्दिष्टाः सुश्रद्धाताः । इत्युक्तोऽजीवः पञ्चधा,

एतस्य लक्षणं तु अन्वर्थसमाख्ययैव चैतन्याभाव एव, जीवानां तु सर्वेषां सूक्ष्मेतराणां नियमात्काचिदपि चेतना विकसत्येव, अपरथाऽजीवत्वप्रसक्तेः, निजविहितातिकठोरकर्ममाहिम्ना निगोदादौ गतोऽपि जीवश्चेतनां कक्षीकुर्वन्नेवाऽवतिष्ठते ।

तथाचाऽऽगमः—

" सव्वजीवाणं पि अ णं अक्खरस्स अणंततमो भागो निच्चुग्घाडिओ चिट्ठइ, सो वि अ जइ आवरिज्जा तेणं जीवो अजीवत्तणं पाविज्जा " इति ॥ ६ ॥

साम्प्रतं द्रव्यषट्कं परिचाययति—

## तानि षड् द्रव्याणि ॥ ७ ॥

तानि, जीवेन सहाऽजीवभेदा धर्माधर्माकाशकालपुद्गलाः षड् द्रव्याणि भगवदागमे प्रज्ञप्तानि ।

ये तु सत्तादिधर्मान् द्रव्येभ्यः पृथगभ्यधुः, नामी सुभाषितारः, द्रव्यात् अत्यंतविलक्षणे सत्त्वे द्रव्यस्यासत्त्वप्रसक्तेः, सत्तायोगात्सत्त्वाभ्युपगमे खकुसुमादीनामपि तथाऽनुषक्तेः, स्वरूपसतां भावानां च शिखण्डिना सत्तायोगेन किं कर्तव्यम् ? । उक्तं हि—

" स्वतोऽर्थाः सन्तु सत्तावत्सत्तया किं सदात्मनाम् ? ।
असदात्मसु नैषा स्यात् सर्वथाऽतिप्रसङ्गतः" ॥ १ ॥

सत्तायोगात् प्राग् भावो न सन् नाप्यसन्, सत्तायोगे तु सन्निति चेत्तदप्यसत्, सदसद्विलक्षणस्य प्रकारान्तरस्या-

सम्भवात्। अपिच, पदार्थः सत्ता योग इति न चकास्ति त्रयम्, पदार्थसत्तयोश्च योगो यदि तादात्म्यम्, तदनभ्युपगमत्राथितम्, अतएव संयोगोपि न, समवायस्त्वनाश्रित इति सर्वं सर्वेण सम्बध्नीयात् नवा किञ्चित्केनचित्, तस्मात्—

"स्वतोऽनुवृत्तिव्यतिवृत्तिभाजो भावा न भावान्तरनेयरूपाः।
परात्मतत्त्वादतथात्मतत्त्वाद् द्वयं वदन्तोऽकुशलाः स्खलन्ति"॥

इति सिद्धान्तो निरवद्यः। एतच्च सामान्यं द्विधा–तिर्यगूर्ध्वताभेदात्। तत्र प्रथमं प्रतिव्यक्ति तुल्यः परिणामः, यथा शबलशाबलेयादिषु गोत्वादि। पूर्वापरपरिणामसाधारणं द्रव्यं पुनरूर्ध्वतासामान्यम्, कटककङ्कणाद्यनुगामिकाञ्चनवत्। विशेषश्च द्वेधा—गुणः पर्यायश्च। तत्र गुणः सहभावी यथाऽऽत्मनि विज्ञानव्यक्तिशक्त्यादिः, पर्यायस्तु क्रमभावी यथा तत्रैव सुखदुःखादिरिति।

एवमेव द्रव्यगुणकर्मणां द्रव्यत्वादिभिर्द्रव्यस्य द्रव्यगुणकर्मसामान्यविशेषैः पृथिव्यम्बुतेजोवायूनां पृथिवीत्वादिभिराकाशादीनां च स्वगुणैर्योगे यथायोगं सर्वं चिन्तनीयम्, एकान्तभिन्नानां केनचित् सम्बन्धानुपपत्तेः। गुणिनां खलु गुणैः सर्वथा तादात्म्ये सर्वगुणानामैक्यप्रसङ्गः, गुणगुणिभावविलोपश्च। एवं सर्वथाभेदोऽपि न विचारसहः, विशेष्य-विशेषणभावासिद्धेः, कुरङ्ग-तुरङ्गयोरिव धर्मधर्मिभावव्यपदेशाभावप्रसक्तेश्च, धर्माणामपि च पदार्थान्तरत्वमनने

एकस्मिन्ननन्तपदार्थप्रसङ्गः अनन्तधर्मात्मकत्वात् वस्तुनः इति भेदाभेदानेकान्त एव कान्तोऽभ्युपगमनीय इति ॥ ७ ॥

अथ चरममङ्गलावभासनपूर्वकं जगदनुगममादर्शयति—

## सिद्धं जीवाजीवात्मकं जगत् ॥ ८ ॥

जगत् लोकालोकस्वरूपम्, जीवाजीवात्मकम्, जीवरूपो भावः, अजीवरूपश्च भावः, नान्योऽतः कश्चिद् भावः । ननु पुण्यपापास्रवसंवरबन्धनिर्जरामोक्षलक्षणान्यन्यान्यपि तत्त्वानि सन्ति भगवदभिहितानि प्रसिद्धानि, तथाहि—

तीर्थकरत्वस्वर्गादिप्रशस्तफलार्जकाः प्रशस्ता जीवाभिसंसृष्टाः कर्मवर्गणाः पुण्यतत्त्वम् । विपरीतं पापतत्त्वम् । शुभाशुभकर्मबन्धहेतवो मिथ्यात्वादिविपया मनोवाक्कायव्यापारा आस्रवतत्त्वम् । मिथ्यात्वाऽविरतिप्रमादकषाययोगलक्षणबन्धहेतूनां सम्यग्दर्शनादिप्रतिपक्षैर्निरोधः संवरः, आत्मनः कर्मोपादान-निदानपरिणामाभावः संवर इत्यर्थः । जीवकर्मणोः क्षीराम्बुवदन्योन्याभिसंश्लेपो बन्धः, स च प्रशस्ताऽप्रशस्तभेदाद् द्वेधा । प्रकृति-स्थिति-अनुभाव-प्रदेशभेदाच्च चतुर्धा । तत्र प्रकृतिर्ज्ञानावरणस्वभावं ज्ञानावरणमित्यादि । स्थितिरध्यवसायकृतः कालभेदः । अनुभावो रसः । प्रदेशः कर्मदलसञ्चयः । तत्र च मूलप्रकृतिरष्टधा, ज्ञानावरणं दर्शनावरणं वेदनीयं मोहनीयमायुर्नाम गोत्रमन्तरायश्चेति ।

तत्र चक्षुरावारकपटादिवत् ज्ञानावारकं ज्ञानावरणं कर्म, तस्य च पञ्च प्रकाराः मतिज्ञानावरणं श्रुतज्ञानावरणमवधिज्ञानावरणं मनःपर्यायज्ञानावरणं केवलज्ञानावरणंचेति। तत्र यद्यदावरणापगमस्तत्तज्ज्ञानाविर्भावः। दर्शनावारकं कर्म दर्शनावरणम्, तच्च नवधा-चक्षुर्दर्शनावरणमचक्षुर्दर्शनावरणमवाधिदर्शनावरणं केवलदर्शनावरणं निद्रा--निद्रानिद्रा-प्रचला-प्रचलाप्रचला-स्त्यानर्द्धिश्चेति।

वेदनीयं कर्म मधुलिप्ततरवारिधारालेहनसदृशं साताऽसाताभ्यां द्वेधा, तत्र मधुलेहनकल्पं सातं करवालधाराजनितच्छेदसमानं चासातम्। मदिरासदृशं मोहयमानं कर्म मोहनीयम्, यथा हि मद्यपानविमूढीभूतः पुमान् सदसत्तत्त्वविवेकाद् बहिस्तिष्ठति, तथैव मोहनीयकर्मणापि, तद् द्विविधम्, दर्शनमोहनीयं चारित्रमोहनीयं च। सुरनरतिर्यग्नारकाणां तत्तद्भवावस्थितिहेतुरायुः कर्म, यथा खलु हेडौ क्षिप्तः कोऽपि जनस्ततो निःसरणविचारमारूढोऽपि विवक्षितकालं तया ध्रियते, तथा नारकादिजन्तवोपि स्वस्वभवस्थानतो निर्गन्तुमनसोऽपि आयुष्कर्मणा ध्रियमाणास्तत्रैवाऽवतिष्ठन्ते। चित्रकारवच्च, अयमसुरः, अयं नारकः, अयमेकेन्द्रियः, इत्यादिव्यपदेशैर्जीवमनेकधा विकुर्वाणं कर्मनाम कर्म। उच्चैर्नीचैर्भेदाद् द्वेधा गोत्रकर्म, यथाहि—कुलालः पृथ्व्यास्तादृशं पूर्णकलशादिरूपं करोति, यादृशं लोकात् कुसुमचन्दनाऽक्षतादिना पूजामाप्नोति, स एव च भूंभलादि तादृशं करोति, यादृशम-

प्रक्षिप्तमद्यमपि जनगर्हां याति, एवं प्रकृतेऽपि यदुदयाद् निर्धनोऽपि कुरूपोऽपि मेधादिगुणरहितोऽपि सुकुलजन्ममात्रत एव लोकस्तुत्यो भवति तदुच्चगोत्रम्, यस्य चोदयात् धनिको रूपवान् मेधिरोऽपि विशिष्टकुलाभावात् लोकनिन्दामाप्नोति, तन्नीचगोत्रम्। दानादिलब्धिघातकमन्तरायकर्म, तच्च घात्यभेदात् पञ्चधा—दानान्तरायः, लाभान्तरायः, भोगान्तरायः, उपभोगान्तरायः, वीर्यान्तरायश्चेति प्रोक्तान्यष्टौ कर्माणि, तानि क्रमतः पञ्च-नव-द्वे-अष्टाविंशति-चतु-र्द्विचत्वारिंशद्-द्वि-पञ्चप्रकाराणि भवन्ति, तत्र मोहनीय-नामवर्जं सर्वकर्मप्रकाराः प्रोक्ताः । मोहनीयकर्म तु दर्शन-चारित्रमोहनीयभेदेन द्विभेदमभिहितमपि मिथ्यात्व-सम्यक्त्व-मिश्रवेदनीयभेदेन त्रैविध्याद्दर्शनमोहनीयस्य, अनन्तानुबन्धि-अप्रत्याख्यान-प्रत्याख्यान-संज्वलनभेदाच्चतुर्विधेन क्रोधादिकषायचतुष्केन, हास्यरत्यरतिशोकभयजुगुप्सापुरुषस्त्रीनपुंसकवेदैश्च नवभिर्नोकषायैः पञ्चविंशतिविधत्वेन चारित्रमोहनीयस्य अष्टाविंशतिधा भवति ।

नामकर्म पुनर्द्विचत्वारिंशद्विधं भवति, तथाहि—गति-जाति-शरीराऽङ्गोपाङ्ग-निर्माण-बन्धन-संघात--संस्थान-संहनन-स्पर्श-रस-गन्ध-वर्णाऽऽनुपूर्वी--अगुरु-लघु-उपघात--पराघात-आतप-उद्योत-उच्छ्वास-विहायोगतयः प्रत्येकदेह-त्रस-सुभग-सुस्वर-शुभ-सूक्ष्म-पर्याप्त-स्थिराऽऽदेय-यशांसि सेतराणि तीर्थकरत्वं च । आदितस्तिसृणां कर्मप्रकृतीनामन्तरायस्य च त्रिंशत्सागरो-

-पमकोटीकोट्यः परा स्थितिः, सप्ततिर्मोहनीयस्य, विंशतिर्नाम्नो गोत्रस्य च, आयुषश्च त्रयस्त्रिंशत्सागरोपमाणि; अपरा स्थिति-र्द्वादशमुहूर्त्ता वेदनीयस्य, अष्टौ नाम गोत्रयोः, अन्तर्मुहूर्त्त च शेषकर्मणाम् । सर्वकर्मप्रकृतीनां विपाकोदयोऽनुभावो भवति,स गतिनामादीनां यथा नाम विपच्यते, ततश्च निर्जरा ।

तिर्यगूर्ध्वमधश्च मनोवाक्कायकर्मयोगविशेषाच्च सूक्ष्मैकक्षेत्रा-वगाढस्थिता नाम हेतुका अनन्तानन्तप्रदेशाः कर्मग्रहणयोग्याः पुद्गलाः सर्वात्मप्रदेशेषु बध्यन्ते । इति प्रोक्तश्चतुर्धा बन्धः । जीवाभिसंश्लिष्टज्ञानावरणादिकर्मणां द्वादशविधतपसा निर्जरणं निर्जरा सा च द्वेधा—सकामा अकामा च । तत्राद्या संयमिनां दुश्चरतपःकायक्लेशादिभिः । द्वितीया विविधक्लेशविपाकसहनतो भवति । मोक्षस्तूक्तः प्राक् । इत्येतानि तत्त्वानि सन्त्यपि कथं नोक्तानि, कथं च जीवाजीवात्मकं जगत् इति द्वे एव तत्त्वे उक्ते ? सत्यम्, जीवाजीवयोः, सर्वेषामुक्ततत्वानामन्तःपातेन जीवा-जीवाऽर्थान्तरस्य गगनकुसुमप्रायत्वात्, ज्ञानादिरूपादिगुणानां कर्मणां चोत्क्षेपणादीनां सामान्यविशेषयोः समवायस्य च जीवा-जीवव्यतिरेकेणाऽनुपपत्तेस्तदात्मकत्वेन सिद्धेः, अभावस्याप्य-धिकरणात्मतयैव स्वरूपानुप्रविष्टेश्च साधूक्तं "जीवाजीवात्मकं जगद्" इति । नन्वभावस्याऽधिकरणात्मकत्वे मृद्द्रव्ये भवि-ष्यति घटः, ध्वस्तो घटः इतिप्रत्ययो दुरुपपदः, अभेदे आधा-राधेयभावाऽनुपपत्तेः, इति चेत्,प्रागभावप्रध्वंसयोश्च द्रव्यपर्यायो-

भयरूपत्वात्, तथा–व्यवहारनयादेशात् घटपूर्ववृत्तित्वविशिष्टं स्वद्रव्यमेव घटप्रागभावः, घटोत्तरकालवृत्तित्वविशिष्टं स्वद्रव्यमेव च प्रध्वंसः, इति । सर्वथा भावार्थान्तरत्वे त्वभावस्य शशविषाणायमानत्वमेव प्रसज्यते इति न कश्चिदर्थोऽतिरिच्यते जीवाजीवाभ्यामिति ।

सूत्रे सिद्धपदं चरममङ्गलनिर्देशो ग्रन्थसमाप्तौ, मध्यमङ्गलं तु तृतीयपरिच्छेदे एकोनविंशसूत्रे 'साध्यम्' इति पदपवित्रितमिति ॥ ८ ॥

इत्याचार्यश्रीविजयधर्मसूरीश्वरविहितायाः प्रमाणपरिभाषाया वृत्तिभूते मुनिश्रीन्यायविजयप्रणीते न्यायालङ्कारे जीवाजीवतत्त्ववर्णनरमणीयः पञ्चमः परिच्छेदः ॥ ५ ॥

---

समाप्तोऽयं ग्रन्थः

अर्हम् ।

# अथ टीकाकृतः प्रशस्तिः ।



जयति श्रीअनेकान्तकान्तसिद्धान्ततोयतः ।
शान्ताशेषतृषो देवो देवार्यो जगदीश्वरः ॥ १ ॥

वादं व्यधाद् भगवता जितवांस्तु कर्म
भिक्षूभवन्नपि मुमोच न चेन्द्रभूतिम् ।
विस्माययन्निति जगत् महता महिम्ना
हर्षाय कस्य न भवेद् गुरुगौतमर्षिः ? ॥ २ ॥

युक्तः सुधर्मसभयाऽप्यभयः सुधर्मा
साधर्मभावरहितो भगवान् सुधर्मा ।
श्रीशासनाधिप जिनाधिप वर्धमान-
पट्टोदयाद्रिसविता सविताऽस्तु शस्तम् ॥ ३ ॥

जम्बूस्वामिप्रभृतिगुरुभिर्भूरिभिः सूरिभिश्चाऽ
लंचक्राणं क्रमत इह तत्पट्टरूपं पयोजम् ।
आतेनाना अभिविकसितं साधुसिद्धान्तसारै
र्भावध्वान्तोद्दलनकुशलैर्भानुभिर्भानुमन्तः ॥ ४ ॥

येषां चाननपद्ममद्भुतरसं दृष्ट्वा मुदामेदुरौ
सूर्याचन्द्रमसौ गवेषणकृतेऽलब्धस्य तस्यान्वहम् ।

वीक्षाऽऽनन्दनवेदनव्यसनतो व्योमाङ्गणे भ्राम्यत--
स्ते जीयासुरृषीशवृद्धिविजया भट्टारकाभ्यर्चिताः ॥५॥
युग्मम् ।

तत्पादाम्बुरुहालयोऽप्रतिमया तत्सेवया साधिताऽ
पूर्वज्ञानमहोदयाः शिवपुरप्रस्थानसार्थेश्वराः ।
नम्रानल्पनरेन्द्रमौलिमुकुटप्रोद्दामदामावली-
चञ्चच्चन्द्रमरीचिसोदररजःसम्मार्जिताऽङ्घ्रिद्वयाः ॥६॥

गत्वा गूर्जरदेशतः पदगतेर्ये पूरितायां गणैः
श्रीकाश्यां प्रतिरोधिदर्शनजुषां विद्यालयाविष्कृतेः ।
अर्हच्छासनमुच्चगौरवपदं श्रीकाशिराजः पुनः
साहाय्यात् प्रतिवोधितस्य महतीं शालां पशूनां व्यधुः॥७॥

धी-श्री-कीर्त्तिमनोरमा रमयता तेनैव भूमीमता
श्रीमद्भारतभूमिभानुविदुषां संसत् समुद्भासिता ।
येभ्यः शास्त्रविशारदेतिसहितं प्रादाद् गरीयः पदं
जैनाचार्य इति, प्रलोक्य भुवनानन्यप्रभावश्रियम् ॥ ८ ॥

जातो यन्मुखभाभरैरभिभवाद् म्लानोऽन्तरिन्दुः शुचा
यद्देहद्युतितो ज्वलन्नतितरां भस्मीवभूव स्मरः ।
यद्भाग्यार्जनचिन्तया सुरगणोऽस्वप्नोऽविनिद्रोऽभवत्
ज्ञानाद्वैतमतं पुनः प्रकटितं व्याप्तेर्भुवो यद्धिया ॥९॥

श्रीइन्द्रा मुनिपुङ्गवाः स्वसमयाब्धेर्मध्यमध्यासिता--
स्तूण्यामायपरागमेषु सुनयज्वालावलीनानलाः ।

ग्रन्थोद्धारणनैपुणीमनुपमां संशोधनाद्यैरल-
ङ्कुर्वाणा इतिहासतत्त्वविबुधाः प्राप्ता उपाध्यायताम् ॥१०॥

श्रीमङ्गला न्यायविशारदान्विताः
श्रीन्यायतीर्था मुनयः प्रवर्त्तकाः ।
पातञ्जलव्याकरणीयभाष्यधी-
महार्णवाऽन्तर्विहितप्रवेशकाः ॥ ११ ॥

व्याख्यानवाचस्पतयो
विज्ञानव्यवसायिनः ।
तपस्यानिरतात्मानः
श्रीभक्तिविजयर्षयः ॥ १२ ॥

हेमोदितव्याकरणप्रतिष्ठिताः
सैद्धान्तिकाः साक्षरसिंहसाधवः ।
प्राज्ञाश्च विद्याविजयाः सुभाषकाः
सद्यः सुसन्दर्भकलाकलाधराः ॥ १३ ॥

अल्पे वयस्यपि समर्जितशाब्दशास्त्र-
ज्ञानोदयाः सहृदया मुनयो मृगेन्द्राः
एवं परेऽपि वहवो मुनयः सकर्णाः
शान्तिप्रिया यदनघक्रममर्चयन्ति ॥ १४ ॥

प्रौढप्रभावभाजो जगदुपकारा जयन्ति ते गुरवः ।
शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीन्द्राः ॥ १५ ॥

दशभिः कुलकम् ।

प्रमाणपरिभाषेयं सुधाविद्याऽम्बुधेस्ततऽ ।
प्रादुरासीदवोधानां प्रज्ञाजागरकारणम् ॥ १६ ॥

काश्यां तद्गुरुदेवताचरणयो भृङ्गीभवन् पद्मयो
र्यैःप्राचीननवीनतर्कविषयां विद्यामुपोपार्जित् ।
दृष्टवाऽदात् कलिकातिकापुरवरे श्रीन्यायवैशारदीं
यस्मै न्यायविशारदत्वपदवीं वङ्गीयविद्वत्सदः ॥१७॥

देशे गूर्जरनाम्नि मांडलपुरे वीशाऽऽख्यश्रीमालिना-
वर्हद्धर्मपरायणौ नयपथाऽध्वन्यौ यशःसुन्दरौ ।
श्रेष्ठी श्रीछगनाऽभिधश्च जनका दीपालि नाम्न्यम्बिका
बन्धुर्यस्य मुनिमहेन्द्रविजयो विद्वान्वभूवान्पुनः ॥१८॥

परीक्ष्य स्वं सम्यक् पुरि च कलिकातेत्यभिधया
गवर्मेन्टाऽधीशोद्भवविबुधविधालयवरे ।
यकः प्राच्यन्याये समुपगतवांस्तीर्थपदवी
मिमां तत्र व्याख्यां व्यधित समुनिन्यायविजयः ॥१९॥

त्रिभिर्विशेषकम् ।

श्रीविक्रमार्कनृपतेरधिकाष्टषष्टा
वेकोनविंशतिशताब्दउपोपनीतः ।
आग्रापुरे समुदमाश्विनशुक्लषष्ठ्यां
वर्षास्थितौ गुरुपदैः सह सिद्धबुद्धिम् ॥ २० ॥

सम्प्राप्ततत्तद्गतमेयमौक्तिकै
    र्दब्धोऽस्त्वलंकार उदासिता तमः ।
मयाऽप्ययं कोविदकण्ठकण्ठिको-
    त्कण्ठां विकुण्ठय्य प्रमदं प्रसारयन् ॥ २१ ॥

युग्मम् ।

प्रमादतो वा मतिमान्द्यतो वा
    स्याद्यत्पराचीनमिहोपपत्तेः ।
तच्छोधनायां भवताऽत्र बाले
    सन्तः ! प्रसादामृतधौतनेत्राः ॥२२॥

## ॥ इति प्रमाणपरिभाषा समाप्ता ॥



# शुद्धिपत्रम् ।

| पृ० | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १२ | दंक्षेपेण | दक्षेपेण |
| ६ | १५ | विपयर्यः | विपर्ययः |
| ” | २३ | किमित्य | किमित्यु |
| १३ | १५ | अधर्मा | धर्मा |
| ” | २० | इत्या | मत्या |
| २२ | २२ | साधाय | साधयि |
| २८ | ” | वरणमिति । | वरणमिति ॥७॥ |
| ” | २६ | ॥ ७ ॥ | । |
| २९ | १८ | मेनापि | केनापि |
| ३२ | ६ | निवृत्तेः । | निवृत्तेः प्रा |
| ३३ | ७ | प्रेक्षा | प्रेक्ष |
| ” | १४ | किमन्यद्धे | किमन्यद्दे |
| ३६ | १४ | केवलाहारो | कवलाहारो |
| ३८ | २० | अनन्त | अनन्य |
| ३९ | २२ | भेदः, आ | भेद आ |
| ४० | १ | के ल | केवल |
| ४२ | १३ | सामाग्र्य | सामग्र्य |
| ४३ | १ | लखेना | लेखना |
| ४७ | ८ | पूव्वो | पुव्वो |

| पृ० | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४९ | १३ | समनन्तरज्ञान | समनन्तरपूर्वज्ञान |
| ५९ | २३ | स्वप्ननादि | स्वप्नादि |
| ६० | ३ | करणोऽद्भू | करणोद्भू |
| ६५ | ५ | सएव | स एवाय |
| ६६ | ४ | यद्भाषे | यद्भाषा |
| ७२ | १६ | पेयांसो | पेयिवांसो |
| ,, | २७ | विकल्पमतिः | विकल्पकमतिः |
| ७८ | १० | तर्ह्यमु | तर्ह्यमू |
| ७९ | २३ | चेत् , उ | चेत् न, उ |
| ८१ | २० | मायातो | मायातः |
| ९९ | १७ | बाधित | तत्र बाधित |
| १०१ | १ | तत्राधि | अधि |
| १०३ | २ | कार्ं | कार |
| १०९ | १४ | विरुद्ध | विरुद्धे |
| ११३ | २५ | बाधितधर्मि | बाधितधर्मधर्मि |
| ११४ | ६ | वैधर्भ्येण | वैधर्म्येण |
| ११४ | १२ | भय-वि | भय वि |
| ११६ | २६ | भयसंशयो | भवव्यतिरेकसंशयो |
| ११९ | ११ | हीना | हीनो |
| १२५ | २५ | कृषि | कृषी |
| १३८ | १३ | पेया | पेयः |

| पृ० | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३९ | १४ | षध | षेध |
| १४१ | २ | सप्तघा | सप्तधा |
| ,, | १२ | तद् | तद |
| ,, | १३ | विस्तर | विस्तरत |
| १४७ | २७ | क्षेप्तृ | क्षेप्तॄ |
| १५० | २१ | प्रति | इति |
| १५१ | २ | संटक | संटङ्क |
| १६० | २७ | प्रति | प्रतिक्षेपात् । |
| १६४ | ९ | निःषेश | निःशेष |
| १६८ | १ | प्रथमसूत्रप्रारम्भे— | |

"उक्तं प्रमाणनयतत्त्वम्, परिशिष्टं पुनः प्रमातारं साम्प्रतं प्रमापयति—" इत्येवं प्रथमसूत्रस्याऽवतरणं विज्ञेयम् ।

| | | | |
|---|---|---|---|
| १७७ | १४ | व्यस्था | व्यवस्था |
| १८९ | २० | निर्मित्ति | निर्मिति |
| १९१ | १२ | सूर्याश्रन्द्र | सूर्याश्चन्द्र |
| १९४ | १४ | रोगयो | रागयो |
| १९६ | ११ | कण्डुकानां | कण्डूयकानां |
| १९९ | २१ | लोकन्ते | लोकान्ते |
| २०० | ३ | सम्पदा | सम्पदः |
| २०० | १० | प्रायुषां | प्रापुषां |
| २०४ | २१ | धर्मायः | धर्मादयः |

## प्रशस्तौ ।

| श्लोक | अशुद्धम् | शुद्धम् |
|---|---|---|
| १६ | सुधाविद्या | सुधा विद्या |
| ,, | स्तऽ | स्ततः |
| १८ | जनका | जनको |
| ,, | मुनिम | मुनिर्म |
| १९ | विधालय | विद्यालय |
| ,, | समुनि | स मुनि |